# दुर्जनकरिपंचानन।



श्री मत्स्वामी आचार्य्य वर्य्य सर्व्व पूज्य श्री
रंगाचारी वृंदावन निवासी की
आज्ञा ऽनुसार

---

गोपीनाथ पाठक ने बनारस लाइट छापे
खाने में छापी सम्वत् १८२१।

Benares:

PRINTED AT THE LIGHT PRESS, BY GOPEE NAUTH PATACK.

1865.

## अथ दुर्जनकरिपञ्चानन ॥

—o◯o—

### श्रीमते रामानुजाय नमः ॥

जीयाच्छ्रीनृहरिःसाक्षाद्भुक्तिमुक्तिफलप्रदः । समस्त
हेयविद्वेषीकल्याणगुणसागरः ॥ १ ॥ भेदाऽभेदादिनाना
विधकुमतिमतैः कण्टकैर्गत्यनर्हम् पन्थानंप्राक्तनंयो ऽद्यात
सुगमतरं युक्तिभिर्ज्ञामरुद्भिः । श्रीमान्रामानुजार्यः स
हिजयतितराम् दर्शयन्वर्त्म मुक्तेर्यन्नामश्रावणाच्चकुदृष्ट
रभिया क्वापिलीनाभवन्ति ॥ २ ॥ चक्रांशंयस्यविष्णोरिति
सुतदनने जागृतीविश्रुतेये तस्मिन्हैभास्सुरांगा नवनिदिवि
षदः श्रौतधर्मैकनिष्ठान् । दुस्तर्कोऽन्धोभ्यपत्यान् वक्रकुम
तिमतध्वान्तविध्वंसनार्कान् दृष्ट्वाधावन्तिदूरे हरिमिवदिति
जावैष्णवान्विद्विषन्तः ॥ ३ ॥ जयपत्तनभूदारः सवायूरामरङ्ग
गाधिपः सर्ववैष्णवसिद्धान्त सागरक्षोभतत्परः ॥ ४ ॥ श्रा
श्रियच्छतकल्पोभू लक्ष्मणश्चग्रिलोऽन्वयम् पाषण्डकुलघातं
गम् सदाश्वापत्तजीवनम् ॥ ५ वैदेशिकश्चतन्त्राणांसर्वेषांल
क्षणोगिरिः । प्रत्नानसंगतानष्टकर्याञ्चहृदेवभाषया ॥ ६ ॥
कृत्वाश्रीवैष्णवमत संप्रदायार्थगोचरान् । श्रीवैष्णवानान्नि
कटं प्रेषयामाससर्वतः ॥ ७ ॥ तत्प्रपन्नैःकैश्चि हृंदा

वननिवासिनः । रंगाचार्यस्तन्निकटं प्रेषितं चोत्तरेच्छुभिः ॥ पदवाक्यप्रमाणज्ञो रंगाचार्यः सुधीः स्वयम् । तत्पत्रमागतं दृष्ट्वा तान्प्रश्नान् सुनिरूप्य च ॥ ९ ॥ असंगतानां वाक्यानां तत्स्थानानि विलिख्य च । भावार्थमुत्तरं तेषां विचार्याशु विलिख्य च ॥ १० ॥ प्राहिणोदुत्तरदलम् तेषामन्तिकमादरात् । यैः प्राक् तत्प्रेषितं पत्रम् स्वान्तिकं प्रश्नपूरितम् ॥ ११ ॥ तैर्वै स्वैस्तत्पत्रम् राजहस्ते समर्पितम् । सपत्रम्पण्डितान्स्वीयान् जयपत्तनवासिन· ॥ १२ ॥ आहूय दत्वा तानूचे पठ तैतद्दलं बुधाः । वदतास्यार्थमखिलम् यथाविद्याम हन्तया ॥ तच्छ्रुत्वा तद्दलं दृष्ट्वा तज्चु:पण्डितास्तदा । वयन्न विद्मः पत्रस्या स्यार्थं शास्त्रार्थमण्डितम् ॥ १५ ॥ कश्चिद्विद्वान् समाकार्य प्रष्टव्यो बहुशास्त्रवित् । इत्युक्ता ते गता गेहम् ततो राजा विचार्य तु । हरिचंद्रं समाहूय दिल्लीतः स्वपुरं द्विजम् ॥ आदिदेश दलं ह्येत द्वृन्दावननिवासिभिः । रंगाचार्यैरस्मदीय प्रश्नोत्तरविभूषितम् । कृतं तदर्थो विज्ञेयो मयातत्कथ्यतां त्वया ॥ १७ ॥ इत्याकर्ण्य तदा पत्रं गृहीत्वा तद्विचार्य च । उवाच भूपतिम्विप्रो धार्ष्ट्यमाचावलम्बनः ॥ १८ ॥ पत्रार्थ स्समया ज्ञातः खण्डनञ्च कृतं मया । वाराणसीस्थविदुषां का रयित्वा च संमतिम् ॥ १९ ॥ श्रावयिष्यामि भवत इत्युक्ता

सन्तृतेनसः । आगत्यकाशींकलकत्तापुरंगन्नामसीस्थिता ॥ आज्ञप्तोऽस्थितःपश्चात् संमतिंबङ्गभानृणाम् । कारयामासकेषांचि न्नाम्नातत्राकरोत्स्वयम् ॥ २१ ॥ तत्रकेपिनजानन्ति यद्वृत्तंलिखितंदले । जनाःसंमतिकर्तारो निमीत्यैवालिखंद्दशौ ॥ २२ ॥ केषांञ्चिद्दापयिष्यामि मुद्राःपंचहिरण्मयीः ॥ २३ ॥ इत्युक्त्वाऽकारयल्लेखम् केषांचिद्विदुषांपुनः । जयपत्तनभूपालैर्वैष्णवेभ्यःपुरातनैः ॥ २४ ॥ दत्तानिविष्णुपूजायै यान्याञ्छिद्वानुतानिवः । ग्रामारण्यगृहादीनि दापयिष्यामिपण्डिताः ॥ २५ ॥ इत्युक्त्वाऽकारयामासस्वलाचरमतंद्रितः । आजगामततोराजा कलकत्ताताऽत्रसानुगः ॥ २६ ॥ अत्रत्यैर्वैष्णवैःपत्रं प्रेषितंराजसन्निधौ । विवादायवयंसर्वे सन्नद्धायदिकोपिते ॥ २७ ॥ विद्वान्समीपेशक्तोस्ति विवादायतदात्वया । आज्ञापितःसभायांसविचारंकुरुताद्द्रुतं ॥ २८ ॥ भवांस्वकाशिराजस्य शृणुतंजल्पमादरात् । वादंवातत्रविद्वांसो मध्यस्थाःसंत्वमत्सराः तत्रतेपण्डितोजेता यदिकार्यसंमतिम् । नोचेत्तूष्णींभवाद्युष्मन् किंवृथाकलहेनते ॥ ३० ॥ विलिख्येत्यन्ततोदत्वा तत्पत्रं स्वकरागतम् । इत्याहराजासर्वेषामग्रतःस्वयमेवतान् ॥ नाहंविवादार्थमिहागतोस्मि स्वकीयसिद्धांतविवेचनाय ।

पृच्छामिसर्वान्विदुषोन्त्रयूयं श्लोकेनवादंक्रुतप्रसह्य ॥ ३२
इत्युक्तासगतोराजा स्वांपुरीमाशुसद्विजः । पश्चात्काशिस्थ
विद्वांसोऽनुतेपुस्तइत्त्वस्ततिं ॥ ३३ ॥ स्मारंस्मारंयेतुचक्रु स्सं
मतिंराजपत्त्रके । एतस्मिन्समयेकाश्यां विद्वांसःकेचनापरे ॥
नतत्त्रसंमतिंचक्रुः काशीराजोमहामनाः । धर्मसंस्थापकस्ते
नतु तोषातीतमत्सरः ॥ ३५ ॥ एतस्मिन्समयेविद्वान्
रंगाचार्यःप्रसन्नधीः । दृंदारण्यात्समायातः कोलाहल
दिदृक्षया ॥ ३६ ॥ तथापरश्चरंगार्यो रीमावासीमहामनाः
समागतस्ततावृत्तांत त्यत्त्र प्रश्नोत्तरैर्युतं । हरिचंद्रोक्तदोषा
णां तूलानांदावसंमितम् ॥ ३७ ॥ काश्यांमध्यस्थविद्वत्सु
विचारार्थमुसमर्पितं । तेदृष्ट्वातद्विचार्योचुः कथुवांश्चसद्विजः
हरिचंद्रकृतप्रश्नः श्लोत्तरंभवताभिदम् । गुञ्जे रत्नान्यपि
तानि यथातद्दिभांतिनः ॥ ३८ ॥ इत्युक्तासंमतिंचक्रू रंगा
चार्यविनिर्मिते । प्रश्नोत्तरदलेसर्वे बुधाःकाशीनिवासिनः ॥

अत्राष्टौप्रश्ना प्राधान्येनकृताः ॥

तत्र प्रथमःसंप्रदायविषयकःतत्त्रसंप्रदायशब्दस्यकोऽर्थ इति
पूर्वपूर्वैः स्वशिष्येभ्यः कृतस्योपदेशस्यविषयीभूतात्म्ययः सम्प्र
दायशब्दार्थःपूर्वपूर्वैस्सम्यक् येनाक्षरंपुरुषंवेदसत्यं प्रोवाच
तास् तत्वतोब्रह्मविद्यामित्युक्तप्रकारेणप्रदीयत उपदिश्यत

समित्पाणिरित्याद्युक्तशमदमादिगुणयुक्तेऽनुपसन्ने ऽधिकारि
तितद्युत्पतेः अयमेवार्थः प्रतितन्त्रार्थइतितान्त्रिकैर्व्यवह्रिय
ते अत्र चावान्तरप्रश्नः प्रथमः कतिभेदाइति संप्रदायत्वावा
न्तरधर्मविषयकोविभाजकतावच्छेदकावलम्बी तत्रोत्तरम्
श्री रामानुज मध्वशङ्कर भास्करयादव नीलकण्ठादि वेदा
न्त मीमांसा विचाराधिकृताचार्य गौतमकणादादि न्याय
शास्त्राधिकृताचार्य भट्टप्रभाकरमिश्रादि पूर्व मीमांसावि
चाराधिकृताचार्यैर्भिदिस्वस्वपूर्वाचार्योपदेशानुगुण्ये नप्रति
पादिताः प्रतितंत्रार्था अनेकविधा इति संप्रदायस्यबहुत्वम्
अतएवन्यायादिग्रन्थेष्वितिसंप्रदाय इति संप्रदायविद इति
लिख्यते यद्यपि भावस्याभावत्वे ना भावस्याभावत्वे न नि
त्यस्या नित्यत्वे ना नित्यस्यनित्यत्वे न गुणस्य गुणित्वे
न गुणिनोगुणत्वे न द्रव्यस्याद्रव्यत्वे ना द्रव्यस्य द्रव्यत्वे ना
न्यस्या नन्यत्वे ना नन्यस्यान्यत्वे न परिणामिनो ऽ परि
णामित्वे ना परिणामिनः परिणामित्वे ना णोर्महत्वे
न महतो ऽणुत्वे न चतत्तद्भावादिभिः प्रतिपादनेन नववा
स्त्वपुविवादः तथापिवैशिष्ट्यभेदात्संप्रदायभेदाः परस्पर
विलक्षणवैशिष्ट्यावच्छेदेना साधारणप्रतितंत्रार्थत्वाभ्युपग
मादिति कस्मै प्रयोजनायेति प्रयोजनावलम्बीद्वितीयःप्रश्नः

तत्रेदमुत्तरम् । नहिकोप्याचार्य्योमोक्षादन्यत्प्रयोजन मुद्दिश्यसंप्रदायं प्रावर्त्तयत् अतोयथायोग्यं स्वरूपसतोज्ञात स्यच संप्रदायस्यमोक्षएवप्रयोजनतयाभिसंहितः यद्यपिमो क्षे प्रयोजनत्वाभिसंधिः क्वचित्क्वचित् संप्रदायेनास्ति तथा पितत्प्रतिपादकशास्त्रे परमप्रयोजनतयाऽभिसंहितंफलमेव तच्चोद्देश्यम् परन्तु सर्वेषांसंप्रदायानां मोक्षाव्यभिचारो स्तिनवेत्यन्यदेतत् नतत्रपर्य्यनुयोगः अतोतस्तदुत्तरादपि विरम्यप । इति श्रीः केनवैलक्षण्येनसंमता इति द्वितो यः प्रश्नः । वैलक्षण्यमसाधारणोधर्मः प्रयोजकत्वरूपंका रणत्वं ज्ञापकत्वपर्य्यवसायित्वतीयार्थः तस्यसंमतापत्यत्रा न्वयः तथाचावांतरभेदस्यपरस्परव्यावृत्तधर्मप्रयोज्यत्वात्ता दृशभेद प्रयोजकासाधारणधर्मविषयिणी जिज्ञासास्वविषया सिद्धत्वापादिकाऽनुमीयते तत्रेदमुत्तरम् । प्रागेववैसि ष्यविशेषस्यसमानार्थेषुभेदप्रयोजकतया यद्यपीत्यादिशंकोत्त रतयाभिहितस्य विभागप्रयोजकत्वमिति श्रीः भेदेषुभवत् संमतिर्न्नवेति चतुर्थवाक्यविकल्पविषयकंतदनुत्तरणीयम्त दनन्तर विकल्पदूषणसमानोत्तरेणैवसोत्तरत्वादिति श्रीः संमतिश्चेत्तदाचरणंकुतोना संप्रतिश्चेत्कुतोऽगीक्रियत इतिषष्टंवाक्यम् संप्रतिश्चेदित्यत्रसंमतिशब्देनकिमुक्तंस्या

त् अभ्युपगमसाच यायार्थ्ये नाभ्युपगमो वापद्यात्रः प्रवृ
त्त दातत्तद्वादिकृतग्रन्थावलोकनविचाराध्यापनप्रवणानांत्वा
नसाचरूपाऽभ्युपगमसनुन्मत्तः कोनेतिब्रूयात् यद्यपरः
पक्षस्तदा परस्परविरुद्धे षुविशिष्टार्थरूपेषुप्रतितंत्रे ष्ववच्छे
दकावच्छेदेन यथार्थज्ञानरूपमभ्युपगमं स्वस्यानुन्मत्तः
कोब्रूयात् संमति श्च तदाचरणं कुतोनेत्यत्रसंप्रदायत्वाव
च्छेदेनाचरणंविवक्षित मुतसामानाधिकरण्ये ननद्वितीयः
सामानाधिकरण्येन तत्समत्वे नतदभावहेतोरपर्य्यनुयो
ज्यत्वात् नचभवदाचार्य्यप्रतिपादितात्प्रतितंत्रादन्यत्राचर
णाभावेहेतुः पर्य्यनुयुज्यत तिवाच्यम् आचरणप्रयोजकस्य
यथार्थाभ्युपगमस्याभावस्यैवयोगत्वे मसाधारणतत्कारण
त्वात् अतएवनद्वितीयः अवच्छेदकावच्छेदेनाचरणप्रयो
जकस्ययथार्थज्ञानस्याभावात् असंमतिश्चत्कुतोऽगीक्रियत
इत्यत्राप्यनभ्युपगमेऽगीकारः पूर्वोक्तानाचरणप्रतिकोट्या
चरणरूपः किंनिबन्धनइतिहेतुपर्य्यनुयोगःक्रतः तत्रनह्यव
च्छेदकावच्छेदेनास्मदाचरणंयुष्माभिरनुभूयतइतिनतत्रहे
तुपर्य्यनुयोगः किन्तुसामानाधिकरण्येनाचरणेस्यात् तत्र
यथार्थज्ञानरूपाचरणहेतोस्सत्वे नासंमतेरभावात् अयंप
र्य्यनुयोगोऽत्यंतासंभवी अत्रैवविकल्पदूषणवाक्येकिंवर्ण

निष्ठ इतिवाक्यम् जिज्ञासाबोधककिंपदघटितं दृश्यते तथा
यमर्थोभवेत् उपरितनवाक्यानुसारात् वर्णनिष्ठत्वं वर्णवि
शिष्टपुरुषनिष्ठत्वं वर्णश्चब्राह्मणादिः तेषांनिष्ठत्वञ्चतदधि
कारकत्वम्तस्यच संप्रदायेसाक्षादसम्भवात्तत्ज्ञानस्यानुष्ठा
नपर्य्यवसायिनस्तद्दत्वं वाच्यम् तथाचसंप्रदायज्ञानस्यानुष्ठा
नपर्य्यवसायिनोऽधिकारोवर्णः वर्णत्वावांतरधर्मविषयक
जिज्ञासाविषयइतिपर्य्यवसितं तत्रोत्तरम् संप्रदायांतरेष्व
ऽधिकारस्यास्माभिरवक्तव्यतयाऽस्मत्पूर्वाचार्य्य संप्रदायेस
उच्यते सर्ववर्णनिष्ठइतितथाचवर्णत्वावच्छिन्नाधिकारइत्यर्थः व
र्णत्वं चसर्ववर्णनिष्ठोधर्मः सचजातिरुपाधिर्वेत्यन्यदेतत् स
र्ववर्णनिष्ठत्वं तावदित्थम् संप्रदायप्रयोजनेमोक्षे सर्वेषामधि
कारोऽस्त्येवार्थित्वसामर्थ्यसापेक्षत्वात्तस्यतदुपायेप्रतितंचार्थि
ऽर्थित्वं सामर्थ्यञ्चापेक्षितं अर्थित्वञ्चफलविषयिणीच्छा
सामर्थ्यं वैदिकउपासने भक्तिशब्दवाच्येऽनिविद्यावत्वम् स्मा
र्त्तेचनामसंकीर्तनपुण्यदेश वासतीर्थस्नानादीना मेवांगत्वा
त्तदनुगुणसामर्थ्यम्अत्रचोपासनस्यभक्तेर्वैदिकत्वस्मार्तत्वभेदः
कथमितिचेदेवम् वैदिकवेदाधिकारिणं वर्णिकर्माद्यनुष्ठेयय
ज्ञादिकमंगकतयावैदिकत्वम् स्मृतिपुराणाद्युक्तनामसंकी
र्तनादिगौणभक्तिशब्दाभिधेयतीर्थस्नानाद्यंगकतयास्मार्तत्व

मिति तत्र प्रथमस्य त्रैवर्णिकाधिकारकत्वमेव द्वितीयस्य तु वर्ण
चतुष्टयाधिकारकत्वम् यथा स्वर्गरूपफलं प्रति श्रुतिस्मृत्यादि
निरूपायत्वेनाभिहितानां ज्योतिष्टोमदर्शपूर्णमासादियाग
विशेषगंगास्नानादीनां मध्ये यागस्य त्रैवर्णिकाधिकारकत्वम्
गंगास्नानादीनां तु सर्ववर्णाधिकारकत्वम् एवं श्रुत्यादिप्रतिपा
दितप्रपन्नेष्वुपायविशेषेऽनेकहेतुभिर्भक्त्यादावनधिकारिभि
रधिकार्य्यं पुरुषविद्याद्यानुकूल्यसंकल्पादिश्रौतस्मार्तांगकेपि
त्रैवर्णिकचातुर्वर्णिकाधिकारकत्वं बोध्यमिति एवं सप्तमवाक्य
घटकं किमाश्रमनिष्ठ इति वाक्यमप्युक्तार्थकमुक्तोत्तरकम् प
रं तु सर्वाश्रमबहिर्भूतस्य विदुरादेरप्यधिकारो बोध्य इति श्रीः
वर्णनिष्ठश्चेत् संप्रदायपूर्वको वर्णो वर्णपूर्वकः संप्रदायो वेति सप्त
मं वाक्यम् आश्रमपूर्वकश्चेत्तदा संप्रदायपूर्वक आश्रम आश्र
मपूर्वकः संप्रदायो वेत्यष्टमं वाक्यम् । तयोरिदमुत्तरम् संप्र
दायपूर्वको वर्णः संप्रदायपूर्वक आश्रम इत्याभ्यां संप्रदायस्य व
र्णाश्रमकारणत्वं दृष्टमुत वर्णाश्रमकालपूर्वकालसंबंधो वा व
र्णपूर्वकः संप्रदायः आश्रमपूर्वकः संप्रदाय इत्याभ्यामपि वर्णा
श्रमयोरपि संप्रदायकारणत्वं दृष्टम् तत्तत्कालपूर्वकालसंबं
धमात्रं वा तत्रोभयत्र प्रथमपक्षो न संभवति अकृतसंप्रदाय
मात्रस्य वर्णाश्रमकारणत्वासंभवात् वर्णाश्रमयोश्च नित्यानि

त्यसंप्रदायत्वावच्छिन्नकारणत्वासंभवाच्च नचवर्णाश्रमयो स्संप्रदायकारणत्वंनदृष्टम् वर्णपूर्वकः संप्रदायः आश्रमपूर्व कोवासंप्रदायइतिवा अैक्यदेशाभ्यां किन्तु अनुष्ठानपर्यवसायि संप्रदायज्ञानकारणत्वमितिवाच्यम् कारणत्वस्याधिकारत्वा नवच्छिन्नस्यवक्तुमशक्यतया ऽधिकारत्वे नकारणत्वस्यवर्णाश्र माणांसर्वेषामुक्तत्वात्किंवर्णनिष्ठइतिप्रश्नोत्तरे अन्यविधस्य कारणत्वस्यशब्दमात्रनिष्ठस्य संप्रदायशब्दनिरूपितस्यवर्णा श्रमाणामसंभवएवउभयोरप्युत्तरस्मिन्पक्षे इदमुत्तरम् संप्र दायस्यवर्णाश्रमाणामपिवेदशास्त्रैकमूलतयासर्वेषुकल्पेष्वनु वर्तनात्परस्परकालपूर्वकालसंबंध उभयेषामस्तीतिविरोधा भावेन विकल्पएवासंभवीति संप्रदाय ज्ञानस्या नुष्ठानपर्यव सायिनोवर्णाश्रमाणांचैवमेवेति श्रीः कियत्कालात्प्रवृत्त इ तिद्वितीयः प्रधानः प्रश्नः तत्रयज्ञोपासनज्ञानादिकंकियत्का लात्प्रवृत्तमितिप्रश्ने किमुत्तरम् अनादिसिद्धवेदैकसिद्ध कत्वादनादिकालात्प्रवृत्तमित्युत्तरंयदिस्यात्तदात्रापितदेवो त्तरमेवेहिताष्टप्रधानप्रश्नावलंबीन्यष्टौवाक्यानि तत्रप्रथ मंवाक्यं तत्रवक्तृकालात्प्रवृत्तस्य मन्वादिग्रंथेष्वदृष्टत्वात्तद्धि तत्कारणत्वाच्चकथंप्रमाणमिति अध्यायमर्थःस्यात् यदिवक्तृका लात्प्रवृत्तस्तदामन्वादिभिरपितत्कालवृत्तिभिर्दृष्टःस्यात् ते

दृष्टस्ते तत्स्वग्रन्थेषु स्मृतिषु वक्तव्यस्य चोक्त्यभावात्तैर्न दृष्ट एव
तद्दृष्टधर्मविलक्षणत्वादस्य कथं प्रामाण्यमिति अत्रोत्तरम् ।
मन्वादीनां त्रिकालदृष्ट्यैन्द्रियिकातीन्द्रियसकलपदार्थवेदिनां ब
हुकालप्रवृत्तात्मकतत्संप्रदायदर्शनमसत्येव स्मृतिषु तदनुक्तिर्न
दर्शनाभावसाधनम् नहि तैर्दृष्टः सर्वोऽप्यर्थस्तैरभिहितः के
षांचित्सामान्यधर्माणां प्रतिपादनमात्रे स्वतुप्रवृत्तत्वात्ते तदु
क्तधर्मवैलक्षण्यमात्रेणाप्रमाणत्वं न संभवति स्वस्मृतौ मनुना
नानुक्तस्यापि भर्त्रनुमरणादिधर्मस्य पतिव्रतानुष्ठेयस्य सर्वै
र्वैदिकैः प्रामाण्यांगीकारात् ननु मनुना तस्यानुक्तत्वेऽपि याज्ञव
ल्क्यादिनोक्तत्वात् मन्वर्थविपरीता या स्मृतिर्नैव शस्यत इति
स्मृत्युक्ताप्रामाण्यहेतुमनूपादिष्टधर्मविरुद्धत्वाभावाच्च प्रा
माण्यमिति चेत्तर्हि प्रकृतेऽपि किंपाणिपिहितमिदम् किंच सामा
न्यधर्ममात्रप्रतिपादनपरेण मनुनानुक्तमप्यूर्ध्वपुण्ड्रतिर्यक्पु
ण्ड्रतुलसीपद्माक्षरुद्राक्षमालाभस्मविदं डैकदण्डधारणं
तत्तत्संप्रदायिभिः प्रमाणतया स्वीक्रियतेऽनुष्ठीयते च न चैके
न मनुनानुक्तत्वेऽपि तेषां कर्तारोऽन्ये ह्युपलभ्यंत इति वाच्यम्
प्रकृतेऽपि हारीतवसिष्ठादिभिः स्मर्तृभिरस्मत्संप्रदायार्थस्या
प्यसकृदुक्तत्वात् सामान्यधर्मपरमन्वादिस्मृत्यविरुद्धत्वा
च्च नाप्रामाण्यशंकावतारः यदि च भवत्संप्रदायप्रतिपादि

कानां वसिष्ठहारीतसनकादि स्मृतीनां भवदीयकल्पितत्वा
द्भवत्संप्रदायाप्रतिपादिकानां वसिष्ठादिस्मृतीनामुपलभ्य
मानत्वाद्भवत्संप्रदायस्याप्रामाण्यमितिविभाव्यतेतदाभवंत
एवोपहसनीयास्युः तथाह्यस्मत्संप्रदायप्रतिपादिकानांहा
रीतादि स्मृतीनामस्मत्संप्रदायार्थविरुद्धार्थ प्रतिपादिका
नांचतासांसत्वे प्यस्मत्संप्रदायार्थप्रतिपादिकानां तासांतत्क
र्तृकत्वसंभवेनास्मदीयकल्पितत्वंनोत्प्रेक्ष्यार्हम्नहिकर्ममी
मांसाप्रवृत्तेनजैमिनिनापूर्वकांडेब्रह्मतदुपासनादीनांसत्वा
प्रतिपादनेपिप्रत्युतदेवतामात्रस्य शब्दमयत्वप्रतिपादनेनब्र
ह्मस्वरूपादौ विप्रतिपत्युपदेशेपिसाक्षादप्यविरोधंजैमिनि
रित्यादिनाबादरायणोक्तस्यजैमिनिमतस्यब्रह्मस्वरूपाद्यंगी
काराव्यभिचारिणोजैमिन्यनभिमतत्वम् तथासतिबादराय
णस्यानाप्तत्वापत्तेः एवंरजिपुत्रव्यामोहार्थं लोकायतमतंप्रव
र्तयतासुरगुरुणाबृहस्पतिनाप्रणीतायाः वैदिकोपजीव्यायाः
स्मृतेरप्यतत्कर्तृकत्वान्यकर्तृकत्व प्रामाण्यानिस्युरिति स्त्रीः
स्वल्पकालाच्छेद्धर्मादिनिर्णयस्तद्विधि स्तत्फलानिचतेषांसर्व
चोपलभ्यमानत्वात्किमर्थं प्रवृत्तइति चस्वायमर्थःभवत्संप्र
दायस्येतस्वल्पकालात्प्रवृत्तत्वात्पूर्वकालेपि धर्मादिनिर्णयत
द्विधितत्फलानांसाधिकाराणांतैस्तैः कृतयुगाद्येषु सर्वचोपल

ध्यमानत्वात्संप्रदायविशेषस्यतस्यैवोपजीव्यत्वाद्यस्मात्संप्रदा
योनवीनःकिमर्थंप्रवृत्तइति तत्रोत्तरम् स्वल्पकालात्प्रवृत्त
त्वंतावदस्मदनभिमत मेवानादिकालात्प्रवृत्तत्वस्यानुपदमुक्त
त्वादेवधर्मादीत्यादितत्फलानि चतेषांसर्वेषामुपलभ्यमानत्वा
दित्यत्रसर्वेषु त्वंतेनकिंवेदार्थग्रन्थाविवक्षिता उतसंग्रहकारा
णाम् शंकराचार्यनीलकंठभास्करयादववैद्यनाथा दीनांग्र
न्थाः नाद्यः अस्यपर्यनुयोगस्यानुपदोक्तसंग्रहकाराणामप्या
पत्तेः नचश्रुतिस्मृतिसूत्रादिषुसंशयविपर्ययनिवृत्तिपूर्वकस
म्यक्प्रतिपत्तेः अस्मदादीनांसम्यक्प्रतिपत्यपेक्षितसकलोपक
रणग्रन्थानामल्पोपकरणानामस्माकमसंभवेनसंप्रतिपत्यर्थं
पूर्वोक्ताःसंग्रहमकुर्वन्नितिवाच्यम्तादृशश्रुतिस्मृतिप्रतिपाद्य
स्यास्मदीयप्रतीतंचार्थस्यसंप्रतिपत्यर्थमेवास्मत्पूर्वाचार्यैः प्रव
र्तितत्वादस्मत्संप्रदायस्यनान्त्यः पूर्वोक्तसंग्रहकर्तॄणामिवास्म
दाचार्याणामपि तत्तत्संग्रहीतनभिहितास्मत्प्रतीतंचार्थप्र
तिपत्तयेप्रवृत्त्युपपत्तेः अपूर्वस्याप्रवृत्तत्वाच्चेति शेषः किंचवेद
पुराणेतिहासादिषुप्रचुरतयाधर्मनिर्णयस्तत्फलनिर्णयश्च वर्त
तएवपुनर्नवीनरीत्या ऽस्मदीययाकिंप्रयोजनमितिवक्तव्यमि
ति तृतीयंवाक्यम् तत्रेदमुत्तरम् वेदपुराणेतिहासादिषुस
र्वेषांधर्मफलानांनिर्णयो ऽस्त्येवतथापिशंकरादयः पूर्वाचा

र्थाँवैद्यनाथादयस्वस्मृतिसंगृहीतास्तत्तद्धर्मं फलंचस्वग्रंथे
षुपृत्यपादयन्तत्किमर्थमितिपृष्टव्यम् यदिवेदादिषुपचुरतया
प्रतिपादितानामपिसांगधर्म फलानांतद्विचारयोग्यताशून्या
नामज्ञानांतद्योग्यतावतामप्यलसानां तादृशसांगधर्मफलसं
प्रतिपत्यर्थं तेषांप्रवृत्तिरितिचेत्तर्हि वेदेतिहासपुराणादिषु
प्रचुरतयाप्रतिपादितानामत्यन्ततंचार्थानां सांगानांसफ
लानां वेदादिविचारयोग्यताशून्यानां याग्यानामप्यलसा
नांसंप्रतिपत्तये ऽस्मदीयाचार्याणामपिप्रवृत्तिरितिविभावय
नवीनरीत्या ऽशास्त्रीययेति यदुक्तं तदत्यंतमसंगतम् अत्र
द्रीतेः कथमशास्त्रीयंत्ववेदविरुद्धार्थप्रतिपादनानुगुण्यादि
तितुनयुज्यते वेदार्थप्रतिपादना नुगुणरीतेर्वेदविरुद्धार्थप्र
तिपादनानुगुण्यासंभवात् यदि वेदार्थनिर्णयप्रवृत्तशंकरभा
स्कर नीलकंठ तदुपवृंहणा.....त्यर्थं प्रतिपादनप्रवृत्तवैद्यना
थादि ग्रंथोक्तार्थप्रतिपादनानुगुणरीतिविरुद्धत्वादित्युच्य
ते तर्हि शंकर यादव नीलकंठादीनांरीतेर्वैद्यनाथनिर्णयसिं
धुकारादीनां रीतेश्चतत्तद्ग्रंथकर्तृ तत्तद्वादिरीतिविरुद्ध
तयासर्वासां रीतिनाम शास्त्रीयत्वापत्तेः रीत्यांनवीनत्वं
चनदोषावहम् एतत्कालपर्य्यंतंब्रह्मानंदादिभिर्नवीननवी
नायारितेःस्वस्वग्रंथेष्वनुसृततयातत्तद्ग्रन्थानामप्यनुपादेय

तापातात्किंप्रयोजनमित्यस्यसंप्रदायसंप्रतिपत्तिद्वारामोक्षए
वप्रयोजनमि त्युत्तरमसकृदुक्तम् एतत्तृतीयवाक्यघटकमिदंवा
क्यम् आचार्यस्यकइति तच्चेदमुत्तरम् अयंप्रश्नोयदिव्यक्ति
विशेषविषयकस्तदानोत्तरार्हः आचार्यस्यदेशकालसंप्रदाय
भेदेनभिन्नभिन्नतयाव्यक्त्यनुगमासंभवात् यद्यसाधारणाका
रविषयकस्तदाआचिनोतिहिशास्त्रार्थानाचारेस्थापयत्यपिस्व
यमाचरतेयस्मात्तस्मादाचार्यः इतिइत्युक्तंशास्त्रविचारज
न्यशास्त्रार्थज्ञानाधीनशास्त्रार्थानुष्ठातृत्वंउपदेशस्यानुष्ठाना
र्थ्यांस्वशिष्याणांस्वानुष्ठितशास्त्रार्थानुष्ठापकत्वंच समुदितमा
चार्यप्रदप्रवृत्तिनिमित्ततयोक्तवचनोक्तमसाधारणाकारः त
द्विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियंब्रह्मनि
ष्ठंतस्मै सविद्वानुपसन्नायेत्यारभ्ययेनाक्षरंपुरुषंवेदसत्यंप्रोवा
चतांतत्वतइत्यादिश्रुत्या ब्रह्मनिष्ठमित्यनेनविवेकोत्यज्ञानस्य
विद्वानित्यनेनतदर्थानुष्ठानस्यतत्वतो प्रोवाचेत्यनेनब्रूयादित्य
र्थकेनोपसर्गद्योतितानुष्ठानपर्यन्तोपदेशमभिदधता ऽ र्थानु
ष्ठापकत्वस्य चोक्तत्वात्तच्चवर्णनिर्देशोदेश निर्देशोवंशपरंपरा
निर्देशश्चवक्तव्यइतिपंचमंवाक्यम् तत्रोत्तरम् सत्संतानप्रसू
तःसदाचारनिष्ठोवेदविदेवब्राह्मण आचार्योभवति सत्संतान
प्रसूतइत्यनेनजनककुलद्वयशुद्धिरुक्तासदाचारनिष्ठ इत्यने

नताद्दशकुलप्रसूतस्यापिविहीनाचारस्य नाचार्यत्वमित्युक्तम्
वेदवित्इत्यनेन वर्णानुगुणकुलद्वयशुद्धियुक्त तदनुगुणाचार
निष्ठास्त्रै वर्णिकव्यावृत्तिः त्रै वर्णिकेष्वपि क्षत्रविशांनाचार्यत्वं
आचार्यकृत्यस्याध्यापकत्वस्यासंभवात् इतिवर्णनिर्देशः देश
निर्देशस्तुनकर्तुं शक्यः कुत्रापिदेशउत्पन्नस्यापि उतस्योक्तगुण
विशिष्टस्याचार्यत्व संभवात्क्वचित्क्वचिन्महाराज द्राविडेषुच
भूरिशः ताम्रपर्णीनदीयत्रेत्यादिकंभागवतेयोगीश्वरवचनं
वासुदेवभक्तिंदुर्लभांमन्यमानस्य राज्ञोजनकस्य देशविशेष
संबंधिनदी विशेषजलसंबध निर्मलीकृतांतःकरणानांतद्भ
क्तिराहारशुद्धिन्यायेनसुलभेतितादृशदेशस्यविशालत्वात्त
स्मिन्देशेउक्तानांपंचानांनदीनां प्रायशोव्याप्तत्वात्तत्रमनु
ष्याणांबहुत्वाद्बनसादुर्लभेत्युक्ताशंकासपनुदतिपरंपरानिर्दे
शस्त्क्रियतएवलक्ष्मीकांतमारभ्यास्मदाचार्यपर्यन्तम् यथावा
नारायणंपद्मभुवंवसिष्ठमित्यादिनाशंकराचार्यपर्यंतंपरंपरा
निर्देशोद्वैतिभिः क्रियतेएवमन्यान्यसंप्रदायिभिरपियथैतो
ह्यं परंपरानिर्देशः क्रियतइति किंचब्राह्मणादृते ऽन्यवर्णोपि
स्वस्याचार्यत्वं कर्तुं शक्नोति नवेति पंचमंवाक्यम् तत्रेदमुत्त
रम् ऋतेऽन्यपदयोः पुनरुक्तिमनादृत्यापिदीयते ब्राह्मणाद
न्योऽपिस्वस्याचार्यत्वं कर्तुं शक्नोति तथाहिमनुस्मृतौ द्वितीये

ऽध्यायेश्रद्दधानः शुभांविद्यामाददीतावरादपि अंत्यादपिप
रंधर्मं स्त्रीरत्नं दुष्कुलादपीति अत्रमुक्तावलीकृत्कभट्टस्य
ताव्याख्या श्रद्धानइति श्रद्धायुक्तः दृष्टशक्तिंगारुडादिविद्या
अवराच्छूद्रादपिगृह्णीयात् अंत्यश्चंडालस्तस्मादपिजातिस्म
रादेर्विहितयोगप्रकर्षात् दुष्कृतशेषोपभोगार्थमवाप्तचंडा
लजन्मनः परंधर्मंमोक्षोपायमात्मज्ञानमाददीततथाज्ञानमे
वोपकृत्यमोक्षधर्मैप्राप्यज्ञानं ब्राह्मणात्क्षत्रियाद्वैश्याच्छू
द्रादपिनीचादभीक्ष्णंश्रद्धातव्यंश्रद्दधानेननित्यंनश्रद्धिनंज
न्ममृत्युविशेषइतितथामहाभारतेकौशिककथायां धर्मव्याध
वृत्तांतेकश्चिद्द्विजातिप्रवरोवेदाध्यायीतपोधनः तपस्वीधर्मशी
लश्चकौशिकोनामभारतइत्यारभ्य अतिक्रामन्नरण्यानिग्रामां
श्चनगराणिचततोजगाममिथिलामिति बहुदूरदेशात्तस्यमि
थिलागमनमुक्त्वाधर्मव्याधमपृच्छत्ससंचाख्यकथितोद्विजैस्त्र
पश्यत्तत्रगत्वांतः सूनामध्येव्यवस्थितं मार्गमाहिशमांसा
दिविक्रीणंतंतपस्विनं व्याकुलत्वात्क्रेतॄणामेकांते संस्थितो
द्विज इत्यन्यपरस्य तस्यावसरप्रतीक्षण मुत्कानमस्कृत्वा
ब्राह्मणेभ्योब्राह्मींविद्यांनिबोधमइति व्याधस्यब्रह्मोपदेष्टृत्व
मुक्त्वाप्रदक्षिणमथोकृत्वा प्रस्थितोद्विजसत्तमइति कौशिके
नव्याधेपरिचर्याकृतेत्युक्तम् एवंतएकदातुमुनयःप्रातर्हुतहुता

न्नयः सत्रसूतंसूतमासीनंपप्रच्छुरिदमादरात् त्वन्नःसंदर्शितो
धात्राद्दुस्तरंनिस्तितीर्षतां कलिंसत्वहरंपुंसां कर्णधारमिवा
र्णव मित्यादिनासूतस्याचार्यत्वोपयोगिसत्कारकर्तृत्वं सत्र
तमित्यादिनोक्तम् उत्तर संदर्भेणसूतस्योपदेष्टृत्वमुक्तमेवेति
स्त्री शक्नोतिचेत्तदाशास्त्रविरुद्धमितिषष्ठंवाक्यम् नोचेत्तर्हि
कुतआचार्यत्वमितिसप्तमंवाक्यम् तदुभयमपिदत्तोत्तरम् ।
शक्तेःशास्त्राविरोधस्यचोक्तत्वात् आचार्यत्वस्यव्यक्तिविशेषेषु
जातिनिरपेक्षत्वज्ञानमात्रसापेक्षत्वयोरुक्तत्वात् परंतु येज
न्मान्तरानु ततपोविशेषा[illegible]द्धजातिस्मरणज्ञानादयः फल
विशेषभोगार्थमवाप्तत्रैवर्णिकेतरजन्मनः तेषामेवोपदेष्टृत्वसं
भवोनान्येषामितिपूर्वोक्तप्रमाणादिभिरवगम्यतइतिस्त्रीः तदु
पदेश्याश्च हीनवर्णोपदेश्याः कथङ्कल्याणभागिनः स्युरिति
अष्टमंवाक्यम् तत्रेदमुत्तरम् यथाकौशिकादयःशौनकादयो
मुनय इति किञ्चकिमिदंहीनवर्णत्वं ब्राह्मणान्यवर्णत्वमि
तिचेत् किन्तद्ब्राह्मणत्वं ब्राह्मण्यांब्राह्मणाद्ब्राह्मण्यांब्रा
ह्मणाद्वाजातत्वमिति तुनयुक्तं प्रथमेविलोमस्यापिनापिताद्
ब्राह्मण्यांजातस्य चाण्डालत्वे नाभिलपनीयस्य ब्राह्मणत्वं
स्यात् तत्रखरथवहननियुक्तपीड़ितवत्ससंदर्शनसंजातक्लेश
यागर्दभ्याचण्डालत्वे न बोधितस्यमतंगाख्यस्यब्राह्मणत्वाभि

मानिनः कस्यचित् ब्राह्मणत्वावाप्त्यर्थम् तपसोऽनवाप्तेष्टस्यष्ट
त्वान्तप्रतिपादकभारतानुशासनिकपर्वविरुद्धम् इति येन्ना
ह्मणाच्छूद्रायां जातस्यतत्वापत्तिः तृतीयेकुण्डगोलकविशेषे
ऽतिव्याप्तिः अव्याप्तिश्चविश्वामित्रवीतिहोत्रयोः तत्रविश्वा
मित्रे गाधितपस्समाराधितचतुराननवरलब्धम् ब्राह्मणत्वम्
वीतिहोत्रे गाढिअनायासेनैवकाशिराजप्रतर्दनं जिघांसयावी
तिहोत्रमनुधावंतंस्वाश्रमदेशमागतं प्रतिब्राह्मणादन्योऽस्म
दाश्रमपदेकोपिनास्तीति कस्यचिन्मुनेर्वाक्येनावाप्तंतदानीं
तंतदाश्रमस्थेनेतिसुस्पष्टंभारतेतदाहमनुर्द्वितीयाध्यायेयोऽ
नधीत्यद्विजोवेदमन्यत्रकुरुतेश्रमं सजीवन्नेवशूद्रत्वमाशुग
च्छतिसान्वयइति तथारण्यपर्वणिआजगरोपाख्यानेब्राह्मणः
कोभवेद्राजन्निति नहुषप्रश्नोत्तरतयासत्यंदानंक्षमाशीलमा
नृशंस्यंतपोघृणा दृश्यतेयत्रराजेंद्र सब्राह्मणइतिस्मृत इति
युधिष्ठिरेणोक्तम् तदुपरिशूद्रेष्वपि चस ंचद नमक्रोधएव
चेतिसत्याद्युक्तब्राह्मणलक्षणस्यशूद्रेष्वतिव्याप्तिमाशंकमाने
नहुषे शूद्रे तुयद्भवेल्लक्ष्म द्विजेतच्चनविद्यतेनवैशूद्रोभवेच्छू
द्रो ब्राह्मणोनचब्राह्मणः यत्रैतल्लक्ष्यतेसर्पवृत्तंसब्राह्मणस्मृतः
यत्रैतन्नभवेत्सर्पतंशूद्रमिति निर्दिशेदितिवाक्येनतस्यापिल
क्ष्यत्वेनातिव्याप्तिः परिहृतातथायदितेवृत्ततोराजन्ब्राह्मणः

प्रसमीक्षितः इत्थाजातिस्तदायुष्मन् कृतिर्यावन्नविद्यत इत्या शंक्यजातिरत्रमहासर्पमनुष्यत्वे महामतेसंकरात्सर्ववर्णा नांदुष्परीक्ष्येतिमेमतिरितिसत्याद्यतिरिक्तंब्राह्मण्यादि दुष्प रीक्ष्यमित्युक्तम् तथा तत्रैवभारतेकौशिकंप्रतिधर्मव्याधः शू द्रयोनौहिजातस्य सद्गुणानुपतिष्ठतः वैश्यत्वंलभतेब्रह्मन्क्ष त्रियत्वंतथैवच आर्जवेवर्त्तमानस्यब्राह्मण्यमभिजायतइत्या ह व्याचख्यौचामुंश्लोकंनीलकंठः गुणकृतएववर्णविभागोन जातिकृतइतिभावइति तत्रैवधर्मव्याधंप्रतिकौशिकः सांप्रतं चमतोमेसिब्राह्मणोनात्रसंशयः ब्राह्मणःपतनीयेषुवर्त्तमा नोविकर्मसु दांभिकोदुष्कृतप्रज्ञः शूद्रेणसदृशोभवेत् यस्तु शूद्रोदमेसत्ये धर्मेच सततोत्थितः तंब्राह्मणमहंमन्ये वृत्तेन हिभवेद्द्विजइत्याह एवंविधानमोक्षधर्मादौ बहूनिवचनानि द्रष्टव्यानि तथाभविष्यत्पुराणेषष्टीकल्पे ब्राह्मणानधिकृत्ये हब्राह्मण्यंब्रूहि किंभवेदित्यादिनाब्रह्माणंप्रतिऋषीणांप्रश्न मुपक्षिप्यमहासंरंभेणब्राह्मण्यादिनजीवविशेषनियतंनापि देहविशेषनियतंनापिविशिष्टनियतं सर्वथाव्यभिचारादित्यु क्त्वाएवंशास्त्रोदितन्याय मार्गभ्रष्टास्तुयेनराः वेदानध्यापयं तोपितेधीयानाः श्रुतिक्रमान् ब्राह्मणत्वाद्विहीयंतेदुराचार विधायिनइति अध्ययनादिमात्रस्याप्रयोजकत्वमुक्त्वाहरिणी

गर्भसंभूतऋष्यशृंगोमहामुनिः श्वपाकीगर्भसंभूतोपिताव्या
सस्सत्तमः गणिकागर्भसंभूतो वशिष्ठश्चमहामुनिः क्षत्रि
यागर्भसंभूतोविश्वामित्रोमहामुनिः शूद्रीगर्भसमुद्भूतोशु
कोनाममहामुनिः तपसाब्राह्मणोजातः संस्कारस्तत्रकारण
मितिब्राह्मण्यादौ ब्राह्मणादितदुत्पतिमात्रं संस्कारमात्रं
वानकारणमित्युक्त्वाउपरितनसंदर्भेणशिखायज्ञोपवीता दी
नांसुखैस्वर्यभार्याज्ञानभयवीर्यकृत्यंगव्यापारादयः पुष्टिदौर्व
ल्यस्थैर्यचापल्यादीनां जात्यनियामकत्व मुक्त्वाक्षमादमोद
यादानंसत्यंशौचंधृतिर्घृणा ध्यानमास्तिक्यमद्वेषो वैराग्यम
सपलतादृत्यारभ्ययएवंभूतमाचारमनुतिष्ठंतिमानवा ब्राह्म
णयंपुस्कलं तेषामित्यादिना सिद्धांतितम् अतोजन्मांतर
सहस्रकृततपोविशेषप्रसादितदेवता विशेषप्रसादलब्धज्ञा
नमूर्तिजातिस्मरादेर्दयासत्यादिब्राह्मणलक्षणसंपन्नस्य जन्मां
तरकृतदुस्कृतशेषभोगार्थं समासादितशूद्रयोनिजन्मनःकस्य
चित्पुरुषविशेषस्याचार्यत्वंनशास्त्रविरुद्धम् भवतामुपदेश्या
श्चत्वारोवर्णास्त्रयो द्वावेकोवेतितत्राष्टौवाक्यान्ये तत्प्रश्नवि
षयाणितत्रप्रधानप्रश्नस्येदमुत्तरम् चत्वारोवर्णायथायोग्यमुप
देश्याइति परन्तु उपदेशकर्मीभूतोमंत्रस्त्रैवर्णिकात्रै वर्णिका
धिकारिभेदेनवैदिकतांत्रिकभेदेनभिद्यते तत्रप्रथमवाक्या वलं

विनांवाक्यानां मध्ये प्रथमंवाक्यं तत्रत्रयोवर्णाद्विजातयस्तेषुग
र्भाधानादिसंस्कारपूर्वकंयज्ञोपवीतादिग्रहणंसावित्रीग्रहणं
चमुख्यमितितत्रोमित्युत्तरम् परन्तु गर्भाधानादिसंस्कारपू
र्वकत्वं यज्ञोपवीतादिग्रहणस्ययदभिहितम् तेनगर्भादीनांय
ज्ञोपवीतादिग्रहणांगत्वं ज्ञायतेतत्त्वनसंभवतितादृशसंस्का
राणांयज्ञोपवीतादिग्रहणंप्रतिआरादुपकारकत्वेन सन्निप
त्योपकारकत्वेनचांगत्वासंभवात्तद्विस्वरूपनिर्वर्तकानां प्रोक्ष
णावीत्त्ववघातपेषण पुरोडाशादीनांफलांशउपकारकाणांप्र
याजानुयाजादीनांचसंभवति नैवंप्रकृते यदिकालविशेषमा
त्रपरत्वं तदोमितिब्रूमइति श्री तद्दतेद्विजातित्वाभावात्व्रा
त्यत्वं यथातथाभवदुपदेशाभावेपिकिंतथा त्वे भवदुपदेशाभा
वात्व्रात्यत्वम् स्नानदानादिकंदृथास्यात् तत्रशास्त्रसंमतम् वि
द्वत्संमतञ्च नोचेत्कुतोविशेषाग्रहइतिद्वितीयंवाक्यं तत्रेद
मुत्तरमवधेयम् गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनाम
करणान्नप्राशनचौलोपनयनादीनांस्वस्वकालेऽनुष्ठानेकाला
तिक्रमणेआषोडशाब्दादितः प्रायश्चित्तपूर्वकमनुष्ठाने त्रैवर्णि
कानां तत्पूर्वकंसावित्रीग्रहणे चव्रात्यत्वं नास्तितदभावेतुव्रा
त्यत्वमिति यथा सामान्यशास्त्रमभिदधाति तथा वैश्रवधर्म
ऐदंपर्येण प्रवृत्तंशास्त्रंव्रात्यत्वंनाभिदधाति अस्मदीयपूर्वोचा

र्यैर्नियमितक्रमेण शास्त्रसम्मतेनोपदेशाभावे परंतु वैश्नवविश
षत्वंनास्तीतिवृत्ते किन्तद्वैश्नवविशेषत्वमितिचेत् इत्थंवैश्न
वत्वंनजातिः नोपाधिर्वाकिंतुविश्नुप्रीतिविशेषविषयत्वंसाच
प्रीतिः पञ्चरात्रादिवैश्नवधर्मासाधारणप्रवर्त्तकशास्त्रोक्त सं
स्कारविशेषतत्पूर्वकाचार्य विशेषोपदेशविशेषजन्यज्ञानतद
र्थानुष्ठानजन्या यदिताहृशप्रीतिंप्रतिपरंपरयाकारणीभूतसं
स्कारविशेषपूर्वकास्मदीया चार्यपरंपराप्राप्तमंत्रविशेषोपदे
शाद्यभावः तदानतस्याःसम्भवइतिश्रवैश्नवत्वंएतच्चा वैश्नवत्वं
गायत्रीविधुराणांवैदिकाव्रात्यत्वमिव वैश्नवावयंत्याज्यतावच्छे
दकंमन्यामहेत्याज्यत्वंचास्माकंगोष्ठ्यनारोहः एवतत्समीपेस्थ
स्तत्पूर्वाचार्यपरंपराप्राप्तार्थविशेषविचारादिकंनकुर्महेयथा
वैदिका व्रात्यसमीपेवेदाध्ययन तदर्थविचारादिकंनकुर्वन्तिय
दिव्रात्यत्वमिवनेनताहृशावैश्नवत्वमभिप्रेतमतदोभितिवृत्तमः
स्नानदानादिकंव्यर्थस्यादिति यदुक्तंतत्सत्यमेवव्यर्थत्यनेनहि
निष्फलत्वमुच्यतेनिष्फलत्वंचनहिफलसामान्याभावोऽपि
तुतद्विशेषाभावः पूर्वोक्तसंस्कारविशेषतदधीनज्ञानानुष्ठानव
ताऽनुष्ठितं स्नानदानादिकंहिभगवत्प्रीतिविशेषात्मकफल
विशेषजनकतयावैश्नवशास्त्रेषु प्रतिपाद्यतेताहृशसंस्कारादि
शून्येनानुष्ठितंचन ताहृशफलविशेषोत्पादायालमतोयुक्तमे

वनिष्फलत्वम् यथा बहुतरद्रव्यव्ययायाससाध्यं ज्योतिष्टो
मादिकमननुसंहितफलेनमुमुक्षुणा नुष्ठितंद्याजसोपिस्त्व
ह्यन्यज्ञान्ज्ञानव्यपाश्रयः ब्रह्मविद्यामधिष्ठायतर्तुं मृत्युम
विद्यये त्यादिप्रमाण प्रतिपन्न ब्रह्मज्ञान पूर्वकमोक्षाख्यफ
लंप्रतिकारणंभवति तदेव त्रिवर्गनिष्ठे नानुष्ठितं स्वर्गादिस्वा
व्यामुष्मिकैहिकफलं जनयतितस्वतुर्वौतकर्मापेक्षयानिष्फल
मित्येवाभीधीयते नहिकिंचदपिकर्मफलसामान्याभाववद्
भवत्यतउक्तमवैष्णवत्वापरपर्यायंग्राह्यत्वं नशास्त्रासंमतम् वै
ष्णवशास्त्रेषुपंचरात्रादिषुतथाप्रतिपादनात् अतएवविद्वत्संम
तंचनहिकस्यनप्रतितंचार्थः सर्वविद्वत्संमतोभवतिअतएववि
शेषाग्रहस्ययुक्तइतिश्रीकिंचयथावर्णाश्रमधर्मवर्णनंसर्वग्रंथेषु
तत्फलवर्णनंच तथाभवत्संप्रदायवर्णनंचक्कुतोनेतितृतीयंवा
क्यम् तत्रेदमुत्तरम् नहिवर्णाश्रमधर्मवर्णनंसर्वग्रंथेषुआदि
काव्यभूते श्री रामायणेसर्वशास्त्रप्रधानभूतायांब्रह्ममीमांसा
यांचतददर्शनात् एवंकर्ममीमांसायामपिनवर्णाश्रमधर्मानि
रूपिताःस्मृतिषुसामान्यधर्मैदंपर्येणप्रवृत्तासुपुराणादिषुचतत
त्प्रतिपादनमस्तीतिचेदुच्यतेतदाऽस्मत्संप्रदायस्यापिवैष्णवध
र्मैदंपर्येणप्रवृत्तासुसनत्कादिस्मृतिषु पद्मपुराणादिषुपांचरात्र
शास्त्रेचप्रतिपादनमस्तीति संतोष्टव्यं भवताकिंच मनुस्मृतौ

सोऽभिध्यायशरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः अपएवस सर्जादौतासुवीर्यमपासृज दित्यनेन श्लोकेनास्मत्प्रतीतार्थएवाभिहितः अत्र मुक्तावली अभिध्यानपूर्विकांसृष्टिंवदतोम नोःप्रकृतिरेवाचेतना स्वतंत्रापरिणमतइति पक्षोनसंमतः किंतुब्रह्मैवाव्याकृतात्मनाजगत्कारणमिति चिदखिडवेदान्त सिद्धान्तएवाभिमतः प्रतिभातीति अतःसर्वग्रन्थेषुअस्मत्सं प्रदायाप्रतिपादनाभिधानं किञ्चिद्ग्रन्थमात्रावलोकिनां बहु तरग्रन्थानवलोकनप्रयुक्तमिति नात्रकश्चिदपराध्यतीति श्री भवदाचार्येभ्यः पूर्वाचार्याव्यासादयोन्यूनास्समानावाऽधिका न्यूनाश्चेत्सकलमार्गविप्लवःस्यादिति चतुर्थंवाक्यम् तत्रे द मुत्तरम् । न्यूनास्समाना अधिकाश्चेति अधिकत्वं तावदि त्थम् व्यासादीनामधिकारविशेषनियतत्वादस्मदाचार्याणाम पिस्वसंप्रदायप्रवर्तनोपजीव्य वेदोपबृंहण पुराणेतिहासवि द्यास्थानभूतमीमांसादिकर्तृत्वात् तत्कृतोपबृंहणविद्यास्था नादिकमुपजीव्यैवसंप्रदाय प्रतिपादकत्वादस्मदाचार्याणास् समत्वन्तावदित्थम् तत्कृतविद्यास्थानादिपर्यालोचनेनापितत्त त्तावश्योऽत्मेक्षणीययुक्ति विशेषनिबंधनरूपभाष्यादिमहत्त रग्रन्थनिर्माणोपयोगे न सर्वविषयकज्ञानवत्वात् अधिकत्व न्तावदित्थम् अस्मदाचार्या यथास्माकमसंकीर्णार्थविशेषोप

पादनमुखेन ज्ञानानुष्ठानेऽत्पाद्य मोक्षसिद्धिपर्यन्तदृशावि
शेषसंपादकास्त्वयानव्यासादय इति अतोन्यूनाश्चेदित्यादि
दूषणमकिञ्चित्करम् आकारविशेषेणन्यूनत्वेपिसर्वतोन्य
नत्वानिरूपणात् समानाश्चेत्तदातत्कर्तृकग्रन्थानां सर्वत्रप्र
चारः कुतोनहीतिपञ्चमंवाक्यम् अत्रभवदाचार्येभ्यइति वि
कल्पवाक्येव्यासादीनामस्मदाचार्यप्रतियोगिकोपकर्षस्तत्प्रति
योगिकसाम्यं तत्प्रतियोगिकोत्कर्षश्च विकल्पितः न्यूनाश्चे
दित्यनेन प्रथमविकल्पार्थोस्मदाचार्यावधिकव्यासादिनिष्ठाप
कर्षदूषणमुक्तम् अनेन वाक्येनाविकल्पितव्यासादिप्रतियो
गिकास्मदाचार्य निष्ठसमत्वदूषणमुच्यते तद्यद्यपिसंदर्भवि
रुद्धं तथापि मध्यमविकल्पार्थपर्यवसन्नास्मदाचार्यनिष्ठव्या
सादिप्रतियोगिकसमत्वस्यतुल्यवित्तिवेद्यस्य दूषणमभिधित्
सितमिति तदुद्धारोत्तरमुच्यते समानाश्चेदित्यादिशङ्कावा
क्यस्या यमर्थः व्यासादीनां युष्मदाचार्यसमत्वे युष्मदाचार्या
णांव्यासादिसमत्वमप्यावश्यकम् एवंसतियुष्मदाचार्यग्रन्थाः
सर्वत्रकुतोनप्रचरंतीति तत्रसर्वत्रप्रचारोनामसर्वेषामुपजी
व्यत्वं व्याकरणादिलाभिवत्स्यात् अन्यविधप्रचारस्यासंभवात्
तादृशप्रचारस्यास्मदाचार्यग्रन्थनांनसंभवतिप्रतितं चार्थविशे
ष निष्टतयासंप्रदायविशेषवतामेवतद्ग्रन्थस्योपजीव्यत्वात्व्या

सादिपरमर्षिप्रणीतस्मृतीतिहासादि ग्रन्थानांतुसर्वसंप्रदाय
निदानतयासर्वसंप्रदायुपजीव्यत्वंयथाव्याकरणादीनांसर्वता
न्त्रिकोपजीव्यत्वं अस्मत्संप्रदायनिष्ठेषुतुसर्वत्रप्रचारोस्त्येवेति
श्री अधिकास्वेत्तत्रप्रमाणंवक्तव्यमितिषष्ठं वाक्यम् अत्रेदमु
त्तरम् आधिक्यंतूक्तरीत्याऽस्त्येवव्यासादीनांसकलसंप्रदायमू
लभूत वेदोपबृंहणस्मृत्यादिप्रणयनेनसर्वोपकारकत्वादस्मा
दृशांवेदतदुपबृंहणार्थबोधनतदर्थानुष्ठापनादिमुखेनास्मदा
चार्याणामेवोतारकत्वातिशयः अत्रप्रमाणंच गुरुरेवपरंब्र
ह्मगुरुरेवपरागतिरित्यारभ्य यस्मात्तदुपदेष्टासौतस्माद्गुरुत
रोगुरुरित्यादि श्रुतिरपिमातृदेवोभवपितृदेवोभवाचार्यदेवो
भवेत्यादिकानह्यचाचार्यपदंव्यासादिसाधारणाचार्यपरम् वे
दमनूच्याचार्योंतेवासिनमनुशास्तिसत्यंवदधर्मंचरेत्यादिप्रक
रणस्थाचार्यपदैकार्थ्यादितिश्रीः सच्छूद्रास्तदुपदेश्यास्तर्हिसच्छू
द्राअसच्छूद्रा वासाधारणास्वेदधर्माकुतोनोपदेश्या उपदे
श्याएवेतिचेत्तैस्सहवैष्णवत्वेन तुल्यतान्यूनतावान्यूनत्वंचेत
त्कृतपाकादिकथंनांगीक्रियतेऽगीक्रियतएवेतिचेतर्हिवैष्णव
दीक्षायांसर्वेवर्णास्समाइति वदंतोभवंतोधन्याइति सप्तमं
वाक्यम् तत्रेदमुत्तरम् सच्छूद्रास्वदसत्साधारण्येनोपदेश्या
एवतथापि चांडालादीनांनोपदेश्यत्वम् अत्यंतनिकृष्टानांते

षांदर्शनस्पर्शनसंभाषणानर्हाणांतद्व्याप्योपदेशासंभवात् सा
मान्यतः शास्त्रतःप्राप्तमप्यपवादबलात्क्वचित्त्यज्यत अपवादा
भावेपिदेशकालानुरोधेनाप्यननुष्ठानंयुक्तं यथातिथिपूजायां
शास्त्रतःप्राप्तंगवालंभनंनानुष्ठीयतेच वर्णिकादिसाधारण्येन
शास्त्रसिद्धमप्युत्तयोनिविधवाविवाहादिकंनक्रीयतेदशवि
धपुत्रेषुपरिगणितोपिपौनर्भवः क्षेत्रजोपिनांगीक्रियतेअतोऽ
धमानोपदेश्याः वैष्णवत्वेन तैस्सहतुल्यतान्यूनतावान्यूनत्वं
चेत्तत्कृतपाकादिकथंनांगीक्रियत इति यल्लिखितं तत्तुल्यत्व
मित्यत्रलेखकप्रमादागतंस्यात् अत्रोत्तरम् वैष्णवत्वेनतुल्य
त्वेपिनहितत्कृतपाकांगीकारस्य विवाहादिव्यवहारस्यवा
प्रसक्तिः सिद्धभैरवीचक्रे सर्ववर्णानां द्विजातित्वेन सम
त्वमंगीकुर्वाणा अपि कौलानहि विवाहादि व्यवहारंकुर्व
ति सर्ववर्णैर्नह्यस्मत्संप्रदायव्यतिरिक्ताअपि मनुष्यत्वेनतु
ल्यैश्चंडालादिभिः कृतपाकादिकमंगीकुर्वन्तिकेचित्कान्य
कुब्जादयोब्राह्मणाइति ब्राह्मणत्वेनस्वसंबंधार्हकृतमपिपा
कादिकंनभुञ्जते वैष्णवत्वेनसाम्यं नामव्यक्त्यन्तरेविषयतया
वर्तमानोयोभगवत्प्रीतिविशेषस्तद्वत्त्वम् समोहंसर्वभूतेषु नमे
द्वेष्योस्तिनप्रियइतिवदतोभगवतआश्रयणीयत्वेवर्णाश्रम ज्ञा
नाद्यधिकारिवैलक्षण्याधीनवैषम्यशून्यस्याश्रितेषु समानैव

ह्रिप्रीतिः नहितादृशीप्रीतिर्मर्यादानांचलोकस्यकर्त्ताकार्यि
ताचसद्गुत्युक्तासर्ववर्णाश्रमादिमर्यादाव्यवस्थापकतत्क्तव्यव
स्थाभंजिकास्यात् वैश्नवदीचायांसर्वैवर्णाश्रमाद्गुतिवदंतोभ
वंतोधन्याद्गुत्यचधन्यपदेनव्यतिरेकलचणया ऽधन्याद्गुत्युक्तं
स्यात् तदत्यंतोपहसनीयम् स्वर्णकरीषयोरपिद्रव्यत्वादिना
साम्यंवदंतमुपहसन्कश्चिदुपहास्यएवभवति यद्वाधमोत्तम
वर्णानां सर्वात्मनाकश्चित्साम्यंब्रूयात्सउपहसनीयः साधा
रणधर्मपुरस्कारेणसाम्यंवदंतमुपहसन् स्वयमेवोपहास्योभव
तीति श्रीः सच्छूद्राद्गुतिचेत्केसच्छूद्राद्गुतितेषांलचणंवक्त
व्यमित्यष्टमंवाक्यम् अत्रोत्तरम् यदिवयंसच्छूद्राणामेवोपदे
ष्टृत्वंब्रूमस्तदातल्लचणजिज्ञासोचिताभवति सदसच्छूद्र
साधारण्ये नोपदेष्टृत्वमस्मदन्तोवयंनविशेषान्तरव्यावर्त्तकवि
शेषान्तरधर्मं प्रष्टव्याः एतदुत्तराभिधानेपियदिभवंतःसच्छू
द्राणामपितत्तद्यान्तिलचणंपृच्छेयुस्तदा तदुत्तराभिधानस्य म
हान्कालोपेक्षितःस्यात् यदिसच्छूद्रलचणज्ञानंभवता मसि
द्धं तदामन्वादिप्रसिद्धग्रन्थावलोकनेनैवभविष्यतीत्युपर
म्यतइति श्री उपदेशे रामकृष्णादि मंत्राः समाना उततेषु
न्यूनाधिकतेतिचतुर्थः प्रधानप्रश्नः तत्रेदमुत्तरम् नह्ययंवि
कल्पः संभवतिपरस्परविरुद्धकोटीनामेव विकल्पसंभवात्

नहिकश्चिद्घटोद्रव्यंपृथवीवेतिविकल्पयतिकिंतुरक्ताःकश्चेति
साम्यंचकेनचिदाकारेणासमयोरपिसंभवति कंबुग्रीवाद्याका
रेणापटविसदृशस्यापिहिघटस्यपृथिवीत्वेनतत्साम्यम् देवत्वा
दिनामनुष्यादधिकस्यपशुत्वादिनान्यूनस्यचदेवपश्वोःप्राणि
त्वेनमनुष्यसाम्यम् एवंविशेष्यभगवत्स्वरूपप्रतिपादकत्वे
नरामकृष्णादिमंत्राणांसाम्यम्तत्तन्नामघटितमंत्रात्मकवाक्य
जन्यशाब्दबोधेष्वोविषयितयाश्रद्धत्तानांव्यापकतागुणविशे
षादीनांप्रतिपादनेनन्यूनाधिकभावस्येति श्रीः समानास्ते
ष्वंत्रांतरनिषेधः कथंक्रियतइतिप्रथमंप्रधानप्रश्नावलंविवाक्य
म् अत्रोत्तरम् मंत्राणांसमानत्वं विशेष्यभगवत्स्वरूपप्रति
पादकत्वेनोक्तमेव नहिसर्वाधिकारिणां तन्मंत्र निषेधो
स्माभिः क्रियते किंतुदृष्टविषयामंत्रार्थज्ञानतदर्थानुष्ठानद्वा
राऽभिमत प्रयोजनविशेषेच्छूनामधिकारिविशेषाणांमो
क्षप्रयोजनकार्थविशेषानुष्ठानापेक्षितयावदर्थो प्रतिपादकत
यानिषेधः क्रियतेताद्दशयावदर्थप्रतिपादकतयामंत्रविशेषस्यै
ताद्दशाधिकारिविशेषैरुपजीव्यत्वादिति श्रीः तद्दानंशिष्या
यकथंनक्रियत इतिद्वितीयंवाक्यम् तत्रोत्तरम् उक्ताहेतोरस्म
त्पूर्वाचार्यपरंपरयातेषामनुपदिष्टत्वा त्कुलपरंपराप्राप्तमंत्र
स्यैवगणर्णिभावादिविचारमंतरेणोपदेश्यत्वस्य मंत्रशास्त्रे

णप्रतिपाद्यत्वात्नह्ये तेमंत्रास्त्वक्तुलपरंपरा प्राप्तमंत्रत्रय
व्यतिरिक्ता लक्ष्मीनाथमारभ्यास्मदाचार्यपर्यंतंकेनचिदाचा
र्येणकस्यचिच्छिष्यस्योपदिष्टा इति शीः न्यूनास्तेत्सर्वमंत्रा
णांशास्त्रसंमत मोक्षदातृत्वाविशेषेणकुतोन्यूनतेतितृतीयं
वाक्यम् तत्रेदमुत्तरम् अनन्योपायत्वरूप स्वासाधारणा
कारभंजकादृष्टद्वारकमोक्षोपायसंसर्गसत्वानामत्वात्संप्रदा
यधिकारिणां दृष्टविषयामोक्षसाधनीभूता नुष्ठानविशेषापे
क्षितया वदाकाराप्रतिपादकत्वे न मंत्रविशेषावधिकापि कर्ष
वतामपिशास्त्रसंमतादृष्टद्वारकमोक्षसाधनतावतां न्यूनतायां
हेतोरसकृदुक्तिरिति शीः प्रशंसापरतयोपपत्तिस्तुसमानैव
परस्परभिन्नभिन्न मंत्रग्रहणकर्तुरितिपंचमंवाक्यम् अत्रप्र
शंसाशब्देनाविद्यमानगुणाभिधानरूपास्तुतिर्वाविद्यमान गु
णाभिधानरूपावानाद्यः नहिकस्मित्प्रमाणपरतंत्रस्यास्ति
कोरामकृष्णादिमंत्राणां तापिन्यादिश्रुतिशततदुपबृंहणपुरा
णेतिहासादिवचनशतसिद्धंप्रतिषेधगंध शून्यमदृष्टद्वारक
मोक्षसाधनत्वमविद्यमानब्रूयात् नद्वितीयः विद्यमानार्था
भिधानरूपप्रशंसायास्तुकस्यापिदोषावहत्वाभावादिति शीः
शैवशाक्तमंत्राणांमोक्षदातृत्वमस्तिनवेति पंचमंवाक्यम् तत्रो
त्तरम् नास्तितेषांसाक्षान्मोक्षप्रदत्वम् तथाहि मंत्राणांमो

च्यप्रदत्वं हितत्प्रतिपाद्यप्रधानदेवताप्रसादद्वारा वक्तव्यम् वै
ष्णवधर्मप्रतिपादनैदंपर्येण प्रवृत्ते मत्स्यपुराणे यस्मिन्कल्पे च
यत्प्रोक्तं पुराणं ब्रह्मणा पुरा तस्य तस्य च माहात्म्यं तत्स्वरूपे
ण वर्ण्यते अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्तितम् राज
सेषु च कल्पेषु माहात्म्यं ब्रह्मणो विदुः संकीर्णेषु सरस्वत्याः
पितृणां च निगद्यते सात्विकेषु च कल्पेषु माहात्म्यमधिकं
हरेः तेष्वेव योगसंसिद्धा गच्छन्ति परमां गति मिति श्रूयते
तस्यायमर्थः ब्रह्मणो ह्यहानि तत्तद्गुणप्रधानानि भवन्ति यद
हः प्रारंभे यस्य गुणस्योद्रेको ब्रह्मणस्तत्प्रधानस्तदहरित्युच्यते
यद्गुणप्रधानेऽह्नि यत्पुराणं प्रकटीकृतं तेन पुराणेन तद्गुणप्रधा
नक देवता माहात्म्यं प्रतिपाद्यते तमः प्रधानाहः प्रकटीकृते
षु पुराणेषु तमः प्रधानस्य रुद्रस्याग्नेश्च माहात्म्य मुच्यते एव
मुत्तरत्रापि तेष्वेवेत्यत्र चैवकारो भिन्नक्रमः तेषु योगसंसिद्ध
एव परां गतिं लभते अत्र योगशब्देनोपाय उच्यते योगः सन्नह
नोपायध्यानसंगतियुक्तिष्विति कोशात्तथा च सात्विकपुरा
णप्रतिपाद्य भगवद्धर्मिमाहात्म्य ज्ञानाधीन तद्विषयध्याना
दिरूपोपायविशेषवतामेव मोक्षरूप परमपुरुषार्थावाप्तिरिति
किंच पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः रजसा तमसा
चैव मानसं समभिप्लुतं जायमानं हि पुरुषं यं पश्येन्मधुसू

दनः सात्विकःसतुविज्ञेयः सर्वमोक्षार्थचिंतकः सात्वात्सं
जायतेज्ञानंरजसोलोभएवच प्रमादमोहौतमसोभवतोज्ञा
नमेवच सत्वस्यैषप्रवर्तकइत्यादिवचनगतेनभगवतोविष्णोरेव
सत्वोद्रेक तदधीनमोक्षरुचि तदर्थमोक्ष शास्त्रविचारतद
र्थानुष्ठानद्वारामोक्षप्रदत्वस्यप्रतिपादितत्वात् शिवशक्त्या
दीनामुक्तरीत्यामोक्षप्रदत्वस्यासंभवएवेति कथंतन्मंत्राणांज
पहोमादिद्वारास्वप्रतिपाद्येषुप्रधानीभूतायादेवतायाः प्रसा
दमुत्पाद्यमोक्षसाधनत्वमिति चोः अस्तिचेन्निंदाकथंक्रिय
तइतिषष्ठंवाक्यम् तत्रोत्तरम् आपिपीलिकात्तृणंभगवद्विभू
तिभूतपदार्थमात्रस्यनिंदा भगवत्प्रसत्तिविरोधितयाऽनु
चितेतिनिंदामात्राद्विभ्यतामस्मात् संप्रदायिनामुक्तमंत्रेषुनिं
दाकथंप्रसरेत्यत्तुवैष्णवधर्मपरशास्त्रेषुविष्णुमंत्रमाहात्म्यनि
रूपणावसरेशिवादिमंत्रनिंदा श्रवणंतदुदितानुदिताहोमनिं
दापरवाक्यनिष्पन्नेनर्नाहिनिंदान्यायेनप्रकृतमंत्रप्रशंसार्थम्
यत्राधिकारिविशेषनिरूपणावसरे तदधिकारिविशेषस्यतत्त
न्मंत्रेभ्योमनोव्यावृत्यर्थमिति चोः नास्तिचेत्प्रतिपादकशा
स्त्रस्यकागतिरिति सप्तमंवाक्यम् तत्रोत्तरम् नास्त्येवतेषांमं
त्राणामुक्तरीत्यासाक्षान्मोक्षप्रदत्वम् तथापिकुण्डधारोपस
तिन्यायेनसंभवतिहिमोक्षप्रदत्वंपरम्परया कुंडधारोहिक

स्विद्यत्तः धनार्थं स्वविषयकोपासनांकृतवतः कस्यचित्प्रत्यक्षी
भूयधनादिरूपपुरुषार्थमल्पं मन्वानस्तेनसहदेवसमितिं प्रा
प्यदेवताः प्रार्थ्यतत्प्रसादेनज्ञानानुष्ठानभाजंकृत्वामोक्षभागि
नमकरोदितिभारतेप्रसिद्धिः तथाशिवशक्त्यादिमंत्रानुगृह्णी
तुरपितत्तद्देवताः स्वप्रसादेनमोक्षोपायानुष्ठानादिविरोधिर
जस्तमोनिवर्हणसत्वाभिवृद्धिद्वाराचिरायमोक्षंसंप्रापयन्ती
ति श्रीः पत्नीगृहस्थरहितस्यदीक्षादानेऽधिकारोस्तिनवे
त्यष्टमंवाक्यम् तत्रोत्तरम् अस्त्येवेति तथाहियज्ञादेःश्रौत
स्यकर्मणोयजमानपत्नीव्यासक्तकर्तृकत्वस्यपत्नी मन्तरानु
ष्ठानासंभवः आज्यावेक्षणाद्यंगविशेषेपत्न्यपेक्षायास्तत्वात्
नहितथास्मार्तस्यखातादेः कर्मणस्तदपेक्षातस्तविधुरादिना
प्यनुष्ठीयमानतयाऽव्यासक्तकर्तृकत्वात् एवमेवमंत्रदीक्षा
दिस्मार्तकर्मणामपि कर्तृत्वंनव्यासक्तम् तद्विनियोगशास्त्रेप
त्नीसंबंधापेक्षायाःक्वाप्यप्रतिपत्तेःएवमेवहिमध्वाचार्यप्रभृ
तिभिरपिदीक्षाकार्येतद्इति श्रीः भवतामत्यावश्यकोधर्मः क
इतिपंचमःप्रधानप्रश्नः तत्रेदमुत्तरम् अस्माकमावश्यकस्त
तदधिकारिणांवर्णाश्रमधर्मः प्रत्यवायपरिहारार्थः परमप्रयो
जनाधिकारार्थःवैश्नवधर्मशास्त्रप्रतिपादितःसंस्कारविशेषमा
रभ्यसिद्धोपायवरणपूर्वापरभाविनोधर्मास्त्रयश्चयश्चधर्मेऽस्म

तत्संप्रदायिनांमध्ये यस्ययस्याऽधिकारोनास्तितस्यतस्यधर्मोना
वश्यकइति  एतत्प्रश्नावलंबीन्यष्टौवाक्यानितत्रेदमादिमम्
तत्रहरिध्यानादिकमावश्यकंयद्युच्यतेतदासंध्यागायत्रीमध्ये
भवतामनावश्यकत्वमितिवक्तव्यम् तर्हिवर्णाश्रमगणनाभव
न्मतेसंमतानवेति  अहोवाक्यरचनाचातुर्यवैदग्ध्यञ्च
किंसंध्यागायत्र्याद्यनावश्यकतामात्रेण वर्णाश्रमगणनाया
असंमतत्वम् निषेधकोटावेवानावश्यकत्वांशस्योपपादकताप्र
तीतेः गायत्र्याद्यावश्यकताऽन्याख्यानात्परमहंसपदाभिधेय
यानामपि केषांचित्कथंचित्शास्त्रपरिशीलनक्षमाणांवर्णा
श्रमगणनासंमतिदर्शनादिति अत्रेदमुत्तरमभिधीयते हरि
ध्यानादिकमावश्यकमित्युक्तौसंध्यागायत्र्यादौ नामनावश्य
कताकथंवक्तव्यानहिमातृसेवापुत्रस्यावश्यकेत्युक्त्यापितृवधो
वक्तव्योभवतिहरिध्यानावश्यकत्वेहि  संध्यावंदनानावश्यक
ताव्याप्तिर्नास्तिहरिध्यानसंध्यावंदनगायत्र्यानुष्ठानयोः प
रस्परविरोधेहिएकस्यावश्यकत्वमन्यस्यानावश्यकत्वेपर्यवस्ये
त्भगवद्ध्यानंहिअविद्ययामृत्युन्तीर्त्वाविद्ययामृतमश्नुते यज्ञे
नदानेनतपसानाशकेन इमाजसोपिसुवज्ञन्सर्वापेक्षाचयज्ञा
दिश्रुतेरश्ववत् आश्रमकर्मापीत्यादिश्रुतिस्मृतिसूत्रादिभि
स्तीत्पत्तिप्रचयार्थं सर्ववर्णाश्रमकर्मापेक्षतइतिभक्ततरंप्रति

पाद्यते इतिसंमतिरन्यथेति च्योः संध्यादिविहीनस्याब्रा
ह्मण्यं भवत्संमतं नवेतिद्वितीयंवाक्यम् तत्रेदमुत्तरम् अ
त्राब्राह्मण्यशब्देन यदिब्राह्मणत्वाभावेविवक्षितः तत्प्रति
योगीब्राह्मणत्वञ्चयदिपरिगीतब्राह्मण्यापरिगीत ब्राह्मणा
ज्जातत्वम् तदा संध्यावंदनादि शून्यस्य तदभावेनविचा
रसहः उपनयनात्पूर्वं संध्याहीनस्य शिशो स्तदभावात्
यदिब्राह्मण्यं संस्कारविशेषःजन्मनाजायतेशूद्रइत्यादिनाद्वि
जत्वपर्यायस्यब्राह्मणत्वस्योक्तत्वात् तादृशब्राह्मण्याभावश्च
नसंध्यावंदनाभावप्रयुक्तः तदधंसस्यसंध्यावंदनादिसत्यपिसं
स्कारोत्तरकालएवजातत्वातदत्यंताभावस्तुध्वंसादिकरणेन
वर्ततएवविरोधात् प्रागभावस्यतूत्पन्नस्यनपुनस्संभवइति य
दिसंस्कारविशेषाधीनस्यादृष्टस्यस्यापिनोध्वंसोविवक्षितोब्रा
ह्मण्यपदेनतदासंध्यावंदनत्यागान्तर्भावि प्रायश्चित्तेन तादृ
शत्यागनिमित्तकेनपुनर्ब्राह्मण्यं नस्यात् ध्वंसस्यानाश्यत
याप्रतियोग्युन्मज्जनासंभवात् प्रायश्चित्तेन ब्राह्मण्यांतरमुत्प
द्यतइतिचेन्नजातकर्मादिकमारभ्योपनयनपर्यंतसंस्काररूप
स्यतदधीन स्यकस्य चिदब्राह्मण्यस्यसंध्यावंदनादित्यागनिमि
त्तकप्रायश्चित्तेनोत्पत्त्यसंभवात्एवंचसतितत्राब्राह्मण्ये संम
तत्वासंमतत्वप्रश्नोवंध्यापुत्रस्यदार परिग्रहसंमतत्वासंमतत्व

प्रश्नवन्निरूपकाणामुपन्यासः किंतुसंध्यावंदनादिकंहिगुरुम
तेपण्डापूर्वफलकम् नैय्याकादीनांप्रत्यवायप्रागभावप्रयोजक
म् प्रयोज्यप्रयोजकभावश्चयोगक्षेमसाधारणः स्वरूपसंबंध
विशेषः सिद्धांतिनामुपायां तरानुष्ठानयोग्यतासंपादकम्
संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मस्वितिस्मृतेः मतत्र
येपिसंध्यावंदनाभावेपंडाऽपूर्वानुत्पत्तिः प्रत्यवायः फलपर्यव
साय्युपाया नुष्ठानविरोधिप्रत्यवायस्सभवेत् गुरुमतेविहित
कालसंध्यावंदनाभावसमानाधिकरणसंध्यावंदनस्यपंडाऽपू
र्वोत्पादकत्वासंभवात्तदर्थं प्रायश्चित्तानुष्ठानम् प्रायश्चित्ता
भावविशिष्टस्यैवतत्कालशुचिजीविनःसंध्यावंदनस्य पंडापूर्वो
त्पादकता वच्छेदकशक्तिविघटकत्वम् नैय्यायिकमतेप्रायश्चि
त्तस्यपूर्वोत्पन्नपापविनाशकत्वम्अनन्तरकालीनसंध्यावंदन
स्यप्रत्यवायप्रागभावप्रयोजकतासिद्धांतिमते पूर्वोक्तोपायानु
ष्ठानविरोधिपापनाशकत्वं चेति मतत्रयेपि प्रायश्चित्तोपप
त्तिःकथंचिदब्राह्मण्यपदप्रतिपाद्यतयोक्तार्थे एवविवक्षितत्त्व
दासंध्यावंदनविहीनस्यतादृशमब्राह्मण्य संमतमेवेति स्मृतेः
संध्यावंदन द्वकारणप्रयुक्तपापनाशायप्रायश्चितंभवत्संमतंन
वेतिद्वितीयंवाक्यम् पूर्ववाक्ये तुसंध्यावंदनाभावस्याब्राह्मण्य
हेतुत्वमुक्तमंचतुपापहेतुत्वमुक्तमिवप्रतिभाति तत्रकिमभिप्रे

त्यात्तुकिंचित् अधिकारिविशेषस्यप्रायश्चितमस्मात्संमतमेवे
त्यस्योत्तरमिति श्री: गृहस्थानांपञ्चदेवपूजनमावश्यकंनवे
तिपञ्चमंवाक्यम् तत्रगृहस्थत्वसामानाधिकरण्येनावश्यक
त्वप्रतिपादकंचेदिदंवाक्यं तदाऽस्यविप्रतिपत्तित्वमेवन संभव
तिएतज्जन्यस्यज्ञानस्यसामानाधिकरण्येनकोटिद्वयावगाहि
नःसंशयत्वासंभवात्संशयजनकवाक्यस्यैवविप्रतिपत्तित्वात्अ
तोवऽच्छेदकावच्छेदेनैककोट्यवगाहिन सामानाधिकरण्येना
परकोट्यवगाहिनोज्ञानस्यजनकमिदमितिवक्तव्यम् एवंचस
तिविधिकोटिर्निषेधकोटिर्वाऽवच्छेदकावच्छेदेनविवक्षि
तानोभयमप्यनसंभवतिअनन्यदेवत्वरूपासाधारणाकारभंग
भीरूणांगृहस्थानांतदावश्यकत्वासंभवात् तदन्येषांगृहस्था
नांतदनावश्यकत्वासंभवाच्चतथाचयेपरिगृहीतदीक्षाविशेषा
मोक्षार्थोपायविशेषानवलंबिनस्तेषांयथाप्रमाणंपंचदेवपूजन
मावश्यकंस्यात् अस्मत्संप्रदायिनांतुगृहस्थानामगृहस्थाना
ञ्चोपायविशेषावलंबिनां परिगृहीतदीक्षाविशेषाणांतदना
वश्यकमेवेतिश्री: पार्थिवपूजनमन्तरागृहस्थानांभोजनमुचि
तंनवेतिपञ्चमंवाक्यम् तत्रोत्तरम् शैवानांगृहस्थानामवश्य
कर्तव्यपार्थिवपूजनया शास्त्रप्रतिपाद्यानांपार्थिवपूजनमंतरा
भोजनमनुचितमस्माद्दृशानांसंप्रदायविशेषवतामुचितमेवे

तिश्री:वलिवैश्वदेवादिकंकर्तव्यंनवेतिषष्ठंवाक्यम् तत्रोत्तरम्
तदधिकारिणांकर्तव्यमेवेति श्री: भगवन्निवेदितवस्तूनांग्रह
णेविधिनिषेधयो:कागतिरितिसप्तमंवाक्यम् अत्रयद्यपिविधि
निषेधवाक्यानिभवतानलिखितानितथापिअस्माभिरेवतानि
विलिख्यगतिरुच्यते सनत्कुमारसंहितायांनिवेदितंतुयद्द्रव्यं
पुष्पंफलमथापिवा निर्माल्यमितितत्प्रोक्तंतत्प्रयत्नेनवर्जये
त् तथातत्रैवनिर्माल्यं भक्षयित्वैवमुच्छिष्टमगुरोरपिमासंप
योव्रतोभूत्वाजपन्नष्टाक्षरंसदा ब्रह्मकूर्चं तत:पीत्वापूतोभ
वतिमानव इतितथेंद्ररात्रेनचोपजीवेद्देवेशंननिर्माल्यानिभ
क्षयेत् तथान्यत्रनचोपयोगयोग्यानि निर्माल्यानिकदाचने
ति तथासंहितांतरे निर्माल्यानिनचाश्नीयान्नजिघ्रेन्नचलं
घयेदिति तथान्यत्रनिर्माल्यं च निवेद्यञ्चभुक्त्वाचांद्रायणंचरे
दित्यभक्ष्यप्रकरणेअनुपठितम् तदेवमनेकसंहितासमधिगत
निषेधस्यनिर्माल्यस्यकथमुपयोगइतिभवत:पूर्व:पक्ष:अत्राह
कश्चित् नाडिकादशकादर्वागुपयोगोननिंद्यते तथेंद्ररात्रए
वदशनाड्यधिकंपूर्वंस्थापयेत्तु विचक्षण: कालयोगसमुद्दिष्टो
रात्रावह्निचैवहिकालयोगातिरिक्तंतुनिर्माल्यं परिचक्षते
ततस्तदप्सुचैवाग्नौक्षिपेद्भूमौखनेत्तुवेतिनेदंयुक्तम्नात्रनि
र्माल्यप्राशनादिप्रशस्यतेकिंतुपूर्णपूजायांविनियुक्तस्यवस्तुन:

नाडिकादशकेपूर्णेपश्चात्यगोविधीयते सामान्येननिवेदित
स्यपुष्पोदनादेःअतश्चत्वत्तयानिर्माल्यत्वेनापनयेनप्राप्तेनाडि
कादशपूर्णेपूजांगतयास्थापनंविधीयते दशनाड्याधिकंपूर्णे
स्थापयेदितिचोच्यतेईश्वरसंहितायाम् दुर्लभोभगवद्भक्तो
लोकेस्मिन्पुरुषस्य तस्यचापि दूर्लभतरोभावोवैयस्यतत्वतः
पादोदकंप्रतिशुभःसिद्धान्नेचनिवेदितेयागादिकेवोपभुक्तेउ
पभोगार्थमेवचअतस्यभावहीनानामभक्तानांचपराणुषनिषि
द्धंभगवन्मंत्र इत्युतमखिलं जगदित्यनेन अविद्यालवोल्ला
सिजिह्वाग्राणामचेतसां सितासितंवचनंसकलंकेंदुबिंबवद्
भाति येपुनर्मूर्खास्तेषामेव निशेषबुद्धि रवतरतिवैश्नवा
धिकारिभिस्तुव्यमानंहिअघौघविध्वंसनायालमितिज्ञायते
एवमन्यत्रकुंकुमंचंदनंचैतत्कर्पूरमनुलेपनं विशुद्देहपरा
स्पृष्टंतद्वैपावनपावनमिति तथा चेश्वरसंहितायाम् उपभु
क्तस्यसर्वस्यगंधपुष्पादिकस्यच स्नानादावुपयुक्तस्यदधिक्षीरा
दिकस्यच दूषणंनप्रयोक्तव्यं शब्दैरप्रतिपत्तिजैः निर्माल्यबु
ध्यादेवीयंपावनं दूषयन्तियेतेयांतिनरकंमूढास्तत्प्रभावापला
पिनः तथाभारते हृदिध्यायन्हरिन्तस्मैनिवेद्यान्नंसमाहि
तः मध्यमानामिकांगुष्ठैः गृहीत्वान्नमितंपुनः प्राणायचे
त्यनापायव्यानायचततः परंउदानायसमानायस्वाहेतिजुह्

यात्क्रमादिति तथाभारते पंचरात्रविदोमुख्यास्तस्यगेहेमहा
त्मनः प्रापणंभगवद्भुक्तंभुंजतेचाग्रभोजनमितितथाचाह
भगवांश्छौनकः नैवेद्यंस्वयमश्नीयादिति एवंभरद्वाजे ऽष्टमे
विकारेनानिवेद्यंहरेः किंचित्समश्नीयाद्व्रपावनमिति एत
त्स्मृतिशतोपबृंह्याचश्रुतिर्महोपनिषदि विष्णुनात्तमश्नंति
विष्णुनापीतंपिबंतिविष्णुनाघ्रातंजिघ्रंतिविष्णुनारसितंरसयं
तितस्माद्विद्वांसोविष्णुप्रहृतंभक्षयेयुरिति एवंचभगवद्विष्णु
निवेतान्नाद्युपयोगः श्रुतिस्मृतिशतसमधिगतः तथाचभा
गवतेत्वयोपभुक्तस्रग्गंधवासोलंकारचर्चिता उच्छिष्टभोजिनो
दासास्तवमायांजयेमहीतिनिर्माल्यंभक्षयित्वेत्यादिनिषेध
वचनानांकागतिरितिचेत् उत्सर्गापवादन्यायएवगतिःमाहिं
स्यादितिसामान्यतः सिद्धहिंसानिषेधोह्यग्नीषोमीयंप
शुमालभेतेत्यादिविशेषतः प्राप्तवैदिकहिंसांपरित्यज्यलौकि
कहिंसामवलंबतेतथाप्रकृतेनिर्माल्यभक्षणनिषेधः विशेषतः
श्रुतिशततदुपबृंहणशतसमधिगत विष्णुनिवेदितान्नभक्षणं
परित्यज्यरुद्रकाल्यादिनिवेदितान्नभक्षणमवलंबतइति श्रीः
देवतांतरनिवेदितवस्तुग्राह्यंनवेत्यष्टमंवाक्यम् तदुत्तोत्तरम्
श्रीः भवन्मार्गेतिलकंकीदृशंकेनद्रव्येणकर्त्तव्यमितिषष्ठः प्र
धानप्रश्नः तच्चेदमुत्तरम् नमस्कृत्याततःशिष्योगुरुंसर्वगुणा

न्वितम् तदाप्रभृति शुभ्राणिनित्यं पुण्ड्राणिधारयेत् आदायवैष्ण
वश्चेनाम्मृत्तिकांविपुलांशुभाम्मूलमंत्रेण भिमंत्र्य ऊर्ध्वपुं
ड्राणिधारयेत् ललाटादिषुचांगेषुकेशवादीन् यथाक्रमम् द्व्यंगुलं
च त्र्यंगुलंवापि ह्यंतरालंप्रकल्पयेत् आम्बुवोर्द्ध्वं गुलंपार्श्वं ल
लाटांतंतुविन्यसेत् पूर्वं वर्णाणिपुण्ड्राणिसछिद्राण्येवधारयेत्
तस्माच्छिद्रान्वितंपुंड्रं ब्राह्मणः सततंवहेत् संध्याकालेजपे
होमेस्वाध्यायेपितर्पणे श्राद्धेदानेचयज्ञे चधारयेदूर्ध्वपुं
ड्रकम् ऊर्ध्वपुंड्रं तुविप्राणांसंध्यानुष्ठानकर्मवत् श्राद्धकाले
विशेषेणकर्ताभोक्ताचनत्यजेत् सर्वैःस्वैः तस्मात्कार्यं ऊर्ध्वपुं
ड्रं यथाविधि स्वजूनिसांनराणांनिस्रंगेषुद्वादशस्वपि प्रमत्ते
पर्वताग्नादौजातयास्वेतस्यत्लयाञ्जवार्यकेशवादीनिनामान्यं
गेयथाक्रममिति स्मृतिपंचरात्रादिवचनोक्त प्रकारेणस्वेतस्ये
त्तिकाद्रव्ये शास्त्रीवैष्णवैरिदानीं क्रियमाणविन्यासविशेषयु
क्तं तिलकंकर्तव्यमिति तथाचश्रुति रथर्वणेहरेः पादाकृति
मात्मनोहितायमध्ये छिद्रमूर्ध्वं पुंड्रं योधारयति सपरस्यप्रि
योभवतिसमुक्तिभाग्भवति तथाशतपथे अथकात्यायनेति
होवाचपरंब्रह्मेति एकोदेवोविष्णुतस्यतुरितिविष्णुरात्मावि
ष्णुतोवाङ्कृतसएषपुरुषोंतर्यामींतर्यामः सविश्वतोमुखःस
र्वात्माविष्णुतस्मादिति नारायणाद्ब्रह्माजायतेनारायणाद्रु

द्रोजायतेद्दूतिसंबाहुभ्यांधमतिसंपतत्रैःद्यावाभूमीजनयंदेवए
कः पुरुषोंतर्यामों ऽतर्यामः सस्मादित्यस्तेजोभवति तस्मादि
त्यलोकोभवतिसर्वस्मिन्देवभवतिसर्वस्मिन्लोकोभवति तस्मचक्रं
द्विभुजेधार्यं त्यग्निहोत्रमेवलोकोभवति ऊर्ध्वपुंड्रमालिखे
त्तस्माद्दिरेखंभवतिभूः स्वयंभूर्ब्रह्मणः सायुज्यंसलोकतांजय
ति यएवंवेद अथकात्यायनेतिहोवाचआदित्यः पुरुषस्मा
दित्यः कस्मिन्प्रतिष्ठितंचाध्यात्मंचप्रतिष्ठितंवेदप्रतितिउति
प्रजयापशुभिः यस्मिन्लोकेऽमृतत्वमेत्यपापः पापंहरतिह
रतिसुदर्शनंध्यायति ऊर्ध्वपुंड्रं द्विरेखंभवतिब्रह्मणः सलो
कतांसायुज्यंजयतियएवंवेदइत्यादिकेति श्रीः तत्रपूर्वं भगव
तस्तत्प्रियायाश्चकोदृशंविधानमितिवक्तव्यमितितदेवतंविना
मष्टवाक्यानांमध्येप्रथमंवाक्यं तत्रेदमुत्तरम् भगवतस्तत्प्रि
यायाश्चविधिपरतन्त्रत्वाभावान्नकिञ्चिद्विधानमस्ति अतोद्र
व्यनियमआकारनियमादिकोपिनास्ति किंतुकिरीटग्रैवेयक
कुंडलाद्याभरणजालवच्छोभार्थमूर्ध्वपुंड्रमभिधार्यते रत्नेन
स्वर्णेनरूप्येणमृगमदेनकाश्मीरेणवायथाविभवम् यथाभक्ति
चिन्हतत्तयावातिलकंक्रियते इति विन्यासप्रकारश्चतत्तदभ
क्तानाममनोवासितरीत्यैवेति श्रीः तत्तद्द्रव्यभेदेषुचकिंप्रमा
णमिति तृतीयंवाक्यम् आकारभेदेचकिंप्रमाणमिति चतु

र्थं वाक्यम् तयोरिदमुत्तरम् नह्यस्मत्संप्रदायिनांतिलकेद्र
व्यभेदोवाकारभेदोस्तीति तत्रवयंनपर्यनुयोज्याः यद्यन्येषां
द्रव्यभेदोवाऽकारभेदोवास्तितर्हितएवप्रष्टव्याःनह्यस्माभिस्स
र्वेषांतिलकोपादानद्रव्येषुतदा कारभेदेषुचप्रमाणमुपन्यस
नीयमितीष्कराङ्केति स्थोः भारतादिमन्वादिस्मृतिषुश्राचा
रादर्शाद्याह्निकग्रंथेषुतिलकविधानंनेतिकिमिति पंचमंवा
क्यम् तत्रेदमुत्तरम् भारतादिमन्वादिस्मृतीनांसामान्यधर्म
प्रतिपादनैदंपर्येणप्रवृत्ततयातिलकविधानस्यविशेषधर्मांतर्ग
ततय तत्रानुक्तिः एवमेवमहत्त्वाद्रुद्राक्षधृतमुद्राविशेषादिधार
णमपिमन्वादिस्मृतिभारतादिष्वदृष्टमितिनहितत्सर्वमप्यप्र
माणमितिवक्तुंमत्तः कोपिशक्नुयात् नचयदिहास्तितदन्यत्रयन्नेहा
स्तिनतत्क्वचिदितिभारतवचनेनभारतदृष्टादन्यस्याप्रामाण्य
प्रतीतेर्भवत्संप्रदायस्यतथात्वादप्रामाण्यं स्यादितिवाच्यम्
भारतेसात्वादश्रुत्वेन्यस्मत्संप्रदायस्यशांतिपर्वणि नारायणी
योपाख्यानेपंचरात्रस्यपङ्कतरंप्रशंसापूर्वकं महतासंरंभेणप्र
माण्यस्यव्यवस्थापनेनपंचरात्रैकजीवातोरस्यसोक्तप्रायत्वात्किं
चाचारादर्शाद्याह्निकग्रंथेषु तिलकाप्रतिपादनमुक्तहेतुकमे
व अन्येष्वाह्निकग्रंथेषुवहुशोविधानदर्शनादिति स्थोः अ
तएवतिलकावश्यकतापांचरात्रिकंप्रमाणमिति षष्ठं वाक्यम् ततष

ष्ठप्रधानप्रश्नवाक्योत्तरेशैवदत्तोत्तरमिति श्रीः विजातीयति लकनिंदायांचकिंप्रमाणमिति सप्तमंवाक्यम् तचोत्तरम् च तुर्थप्रधानप्रश्नानुबंधिप्रश्नवाक्योत्तरेशैवदत्तमेव नहिसर्वेषामि धिकारिणामकर्त्तव्यं विजातीयं तिलकमस्माभिरित्युच्यो किंतुअस्मत्संप्रदायिनामेवेत्युच्यते तत्रापीदंप्रमाणंभविष्य ति अथयदितेकर्मविचिकित्सावावृत्तविचिकित्सावास्यात् येतत्रब्राह्मणाःसंमर्शिनः युक्ताआयुक्ताः अलूक्षाधर्मकामाः स्युः यथातेतत्रवर्तेरन्तथातत्रवर्तेथाइतितैत्तरीयोपनिषच्छ्रु तिवाक्यजातं स्वस्वकर्मवृत्तसंशयेस्वसंप्रदायनिष्ठाचरणजना तन्निश्चयकर्तव्यतामभिदधदिति श्रीः तदनंगीकारेदोषस्य चकिंप्रमाणमित्यष्टमंवाक्यम् तत्रेदमुत्तरम् अस्मत्संप्रदा यिभिर्वर्णाश्रम विहित सामान्य धर्मानुष्ठान काले वैश्न वत्वोपयुक्त विशेष धर्मानुष्ठान काले चोक्त तिलक मवश्यं कर्तव्य मित्यत्र प्रमाण प्रदर्शने नोक्त मेवेति श्रीः सकल शास्त्रसंमतः शिव विष्णोरभेदोभवत् संमतोनवेति सप्तमः प्रधानप्रश्नः तत्रसंमतएवेत्युत्तरम् सचाभेदः कीदृश इति विवेचनीयं किंस्वरूपा भेदोब्रह्मठइतिवत् विशिष्टाभेदो वानीलोघटइतिवत् नाद्यः सर्वैः शास्त्रैरत्यंतवैलक्षन्येन प्रतिपादित योस्तयोः स्वरूपैक्या सम्भवात् अपरः

पन्नोऽवतिष्ठते सच शरीरशरीरिभावेनस्यात् अतएवार्थ
र्वशिखायामपि अहमेवप्रथममासंवर्तामिभविष्यामिचेत्या
दिना सृष्टिकालात्पूर्ववृत्तित्वं प्रलयकालवृत्तित्वं सृष्टि
कालवृत्तित्वं सर्वकारणत्वपर्यवसायिशास्त्रदृष्ट्यातूपदेशोवा
मदेववदित्यवलंब्योक्तवति रुद्रे साक्षात्कारणत्वप्रतिपत्तिर्दे
वानां श्रोतॄणां माभूदितिश्रुतिः सोंतरादंतरंप्राविशदित्यने
नेदंचसर्वकालवृत्तित्वाभिधानं रुद्रस्यांतर्यामिबुद्ध्येत्याह सः
रुद्रः अन्तराप्रकृत्यन्तरवर्त्तमानाज्जीवादन्तरन्ततः सूक्ष्मभू
तन्तस्याप्यन्तरात्मभूतपरमात्मानंप्राविशत्मनसाविचारितवा
नित्यर्थःसर्वान्तर्यामिणःस्वांतर्यामिणस्तेस्यात्स्वांतर्यामिदर्श
नेहिएवंबुद्धिर्भवतितथैवहि शास्त्रदृष्ट्यातूपदेशोवामदेववदि
तिसूत्रविषयवाक्येतद्धैतत्पश्यन्नृषिर्वामदेवःप्रतिपेदेऽहंमनुर
भवंसूर्यश्चेत्यत्रज्ञायते तथास्मृतिरप्यमुमर्थंवदतिसर्वगत्वादन
न्तस्यसएवाहमवस्थितः मत्तःसर्वमहंसर्वं मयिसर्वं सनातने
अहंहरिःसर्वमिदंजनार्दन इत्यादिका सचायमभेदोऽस्मत्
संमतशिष्येभ्यउपदिश्यतएव श्री भाष्यश्रुतप्रकाशिकादिग्र
न्थेषुवक्ष्यतरमुपपादनादितिश्रीः तर्ह्यभेदःसंमतश्चेत्तदुपदेशः
कुतोनक्रियतेप्रत्युतशिवपूजादेः प्रतिषेधः कथंक्रियतइत्येत
त्प्रस्तावत्तत्रिपुण्ड्रसुवाक्येषु प्रथमंवाक्यम् तत्रोत्तरम् उक्तोऽ

भेदउपदिश्यतएवशिवपूजादेः प्रतिषेधः क्रियतएव येप्यन्यदे
वताभक्तायजन्ते श्रद्धयान्विताः तेपिमामेवकौंतेय यजंत्यवि
धिपूर्वकमिति भगवतैवदेवतांतरपूजनादेरविधिपूर्वकत्वाभि
धानात् प्रतिबुद्धानसेवंते यस्मात्परिमितम्फलमिति वचने
सर्वैश्चत्रनधर्मोयः प्रतिबुद्धस्तुमोक्षभाक् इत्युक्तप्रतिबुद्ध
शब्दाभिधेयमुमुक्षुभिरल्पफलप्रदा नाद्देवतां तराणामसेव्य
त्वाभिधानाच्चरुद्रस्यमोक्षप्रदत्वासम्भवः भारतखिलहरिवं
शीयघण्टाकर्णोदन्तांतेसुस्पष्टइत्यस्मदनुयायिनामनन्यदेवत्वा
कारभंगभीतानांयुक्तएव शिवपूजादित्यागइति श्रीः भेदस्ये
च्छास्त्रोक्तदोषभागिनःस्युरिति द्वितीयंवाक्यम् तत्रोत्तरम्
यदिसोपपत्तिकंशास्त्रैकगम्यामेदस्यविरुद्धं भेदमवदिष्याम
तदादोषभागिनोऽभविष्यामेति प्रत्युतस्वरूपाभेदंवदन्तएवत
थाभवेयरिति श्रीः किन्त्वपूर्वाचार्यैर्भारत भागवतादि टीका
कारैर्यथाविरोधपरिहारः कृतः सप्रमाण मप्रमाणं वेति
तृतीयंवाक्यम् । तत्रेदमुत्तरम् । भारतभागवतादिटीका
कारानीलकंठश्रीधरादयःनहिसर्वमतानुगुण्ये नटीकामकु
र्वन् किन्तु स्वस्वाभिमतेसंप्रदायानुरोधेनकंठतोभेदप्रतिपा
दकानामपिवाक्यानांकथंचिदभेदप्रतिपादनपरत्वमापाद्यटी
कामकुर्वन् तथा स्मत्संप्रदायाचार्यव्यासार्य्यवीरराघवाचा

र्यप्रभृतिभिरस्मत्संप्रदायानुरोधेन टीकाःकृताः तादृग्टीका. परित्यज्यान्यसंप्रदायस्थैः कथंचित्स्वसंप्रदायानुरोधेनस्वाभिमतप्रतीतंचार्थे वाक्यानियोजयद्भिःकृताटीका अस्मत्संप्रदायविरुद्धा अस्माकमनुपादेयातत्कृतविरोधपरिहारस्त्वनास्माकमभिमतःअस्मदाचार्यै रन्यथैवविरोधस्यपरिहृतत्वात् अन्यथैकसंप्रदायस्थपुरुषकृतटीकायाः सर्वसंप्रदायोपादेयत्वे श्रीरामानुजमध्वशंकरभास्करनीलकंठादिभाष्याणांविलयप्रसंगःसंप्रदायभेदश्चनस्यात्एवंशंकरभाष्योपरिप्रवृत्तभामतिनिबंधनकल्पतरुपरिमलपंचपादिकाविवरणतत्वप्रदीपाख्यानांव्याख्यानामवच्छेदकप्रतिबिंबवादावलंबिनीनांसर्वोपजीव्यंभाष्यंस्वस्वानुगुण्येनयोजयंतीनांकथंकस्याप्युपादेयतास्यादतस्त्वदुक्तापूर्वाचार्यकृतव्याख्या तत्प्रतिपादितविरोधपरिहारश्चकाचित्कश्चिदप्रमाणमेवास्माकम्यच्चात्वत्प्रतीतंचविरोधोभवतीत्यादि प्रमाणत्वे तर्हिभवदीयग्रंथेषुकुतोविरुद्धत्वतया वर्णनमिति चतुर्थं वाक्यम् तत्रेदमुत्तरम्।

प्रमाणासंप्रतिपत्तेरेवप्रमाणसंप्रतिपत्तिमूलकमिदं वाक्यम् नोत्तरार्हम् अस्मदीयसंप्रदायविरुद्धार्थप्रतिपादकतट्टीकार्थोपमर्दनार्थंवर्णनमस्मदीयग्रंथेषुयुक्तमेवेति इत्यादि अप्रमाणंचेतदाविज्ञाप्यज्ञावेतिवक्तव्यमिति पंचमंवाक्यम् तत्रेदमु

त्तरम् अप्रमाणस्यांगीकृतत्वादर्थविशेषज्ञानांशेविज्ञत्वांगी
कारासंभवात् अन्यार्थांशेविज्ञत्वेपितेषांतदंशेऽज्ञत्वमेवा
स्माभिरंगीकर्तव्यमिति नहिवयंसर्वज्ञानांव्यासादिपरमर्षी
णामज्ञत्वंब्रूमः किंतुतत्कृतग्रंथपुराणादिकंस्वाभिमतेकुत्र
चिदर्थविशेषे आग्रहविशेषेण कथंचिद्योजयतांव्याख्यातृणा
मेव अतोनसप्तमवाक्ये वक्ष्यमाणदूषणप्रसक्तिः अस्माभिस्ते
षामज्ञत्वानभिधानेपितत्संप्रदायस्थै रेवा न्यैःकृतायांटीका
यांतदुक्तार्थनिराकरणेनार्थां तरस्यवर्णितत्वात् अन्यतरस्या
ज्ञत्वंवक्तव्यमेवकथमन्यथाप्ययदीक्षितकृतसिद्धांतलेशग्रंथे
ष्वेकैकस्मिन्विषये ऽद्वैतिप्रतितंत्रार्थानाम नेकरूपेणपर
स्परविरुद्धे नवर्णनस्यतदानुगुण्येनभाष्ययोजनस्यचदर्शने
नतत्तदर्थविशेषमभिदधतां सर्वेषांप्रामाणिकत्वं स्यादिति
श्रीः विज्ञाश्चेत्तदातल्लेशःप्रमाणरूप इतिषष्ठंवाक्यम् तत्पूर्वो
क्तवाक्योत्तरेणदत्तोत्तरमिति श्रीः अज्ञाश्चेत्तदासर्वजगद्वि
रुद्धवादिनोयूयंकइतिविवेचनीयमितिसप्तमंवाक्यम् तत्रेद
मुत्तरम् नहिकस्यचित्स्वाभिमतप्रतितंत्रार्थविरुद्धार्थवा
दिनोभारतादिटीकाकृतोऽज्ञत्वाभिधान मात्रेणार्थविशेषे
सर्वजगद्विरुद्धवादिनोवयंतथाकेयूयमिति चेदस्मत्संप्रदाय
विरुद्धप्रतितंत्रार्थाभिधायिवा दिकरटिविभेदनक्षमयुक्तिन

स्वपञ्चास्यादुत्यवेत्तीतीतिश्री:यस्त्वांद्वेष्टि समांद्वेष्टियस्त्वाम
नुसमानु त्वदुपासाजगन्नाथसैवास्तु ममगोपतेइत्यादिवाक्या
नामर्थोपिकयारीत्याभवतीतिविवेचनीयमीत्यष्ठमंवाक्यम् त
त्रेदमुत्तरम् यैवैःशिवपरत्ववादिभिर्बहुतरमुपलभ्यमाना
नांशिववाक्यानांभगवतिस्वस्यशेषत्वपारतंत्र्यबोधकानांभग
वतस्सर्वथापरत्वबोधकानामन्यवाक्यानांचशिवस्यपरमवैष्णव
त्वप्रतिपादकानांभगवदुपासनतत्कैंकर्यादि प्रतिपादकानांपा
र्वतीप्रणमुखादिकं प्रतितत्वोपदेशप्रवृत्तशिववाक्यानांविष्णुप
रत्वप्रतिपादकानांस्वस्यभगवत्प्रसादमात्रोपजीव्यत्व बोधका
नांयथारीत्याऽर्थोवर्ण्यते यस्त्वांद्वेष्टीतिवचनंतुनकिंचिद्विपन्न
म् अनेककालमारभ्यबहुतरंतपः कुर्वतस्तत्कृतपोवशीकृतं
भक्तवत्सलंभगवतंप्रतियथाममसर्वलोकपूज्यतास्यात्तदाकु
र्वित्यसकृत्शिवेन प्रार्थितस्यभगवतोविष्णोरवतारावस्थायां स्वप्र
तिज्ञातोपपत्यर्थं व्रतधारणतपश्चरणादिपूर्वकंपुत्रप्राप्तिंप्रार्थय
मानस्यकिमनुपपन्नम् किंचभगवान्हिज्ञान्येकजीवातुर्ज्ञानि
नात्रेज्ञानीत्वात्मैवमेमतमितिवादीज्ञान्यग्रेसरंशिवं प्रत्ये
वंवदतिचेत्किमाश्चर्यम् ममप्राणाहिपांडवाइतिस्वाश्रितपांड
वमात्रेस्वधारकत्वमभिहितवानिति एवमेपवचनंपांडवविष
येसभापर्वणिश्रूयतेत्वदुपासेत्यदस्त्वंतु स्वकृतपूर्वप्रतिज्ञानुगुण

मितिनकाचिदनुपपत्तिरितिभवतामान्हिकं कीदृशमित्यष्ठ
मः प्रधानःप्रश्नः यथा वैदिकानामास्तिकाग्रे सराणा मिति
तत्रोत्तर मिति तदनुबंधीन्यष्टौवाक्यानि तत्रेदमादिमम्
प्रातःकृत्यादि संध्यावंदनांतंकर्मकियाश्रुत्यास्मृत्या वाक्रियते
इति तत्रेदमुत्तरम् संध्यावंदनादिनित्यंकर्म नैमितिकञ्च
गृह्यकारैर्यतत्तदसाधारण्ये नोपयोजितैःश्रुतिमंत्रैर्गृह्यका
रोक्तरीत्यैवक्रियते श्रौतंतुकल्पोक्तरीत्याप्रातःकृत्यंदेहशुध्या
दिकिंस्मृतिवचनसंगृहीतस्मृतिसार्वभौमादिकृतान्हिकग्रंथप्र
तिपादितयारीत्येति श्रीः विधानग्रंथस्यकीदृश इति द्विती
यंवाक्यम् श्रौतस्मार्तकर्मसुमिमांसिताःश्रुतयःस्मृतयस्तथा
विधाविधायकग्रंथाः अनुष्ठानक्रमप्रतिपादकास्तुकल्पगृह्य
सूत्रादयः श्रौतग्रंथान्हिकग्रंथाश्चेति गायत्रीजपस्यावश्य
कता ऽनावश्यकतावेति तृतीयंवाक्यम् तत्रेदमुत्तरम् त्रै
वर्णिकाधिकारिविशेषाणांवर्णाश्रमधर्मत्वेनावश्यकतावैश्नवध
र्मत्वे नानावश्यकता गायत्र्यनधिकारिणामत्रैवर्णिकानांस
र्वेषानावश्यकतासर्वेषांवैश्नवत्वे नमंत्रजपादेरेवावश्यकत्वादि
ति श्रीः आवश्यकताचेत्तत्रभस्मधारणस्यरुद्राक्षमालयाजप
स्यावश्यकतावानावश्यकतेतिपंचमंवाक्यम्तत्रोत्तरम् आवश्य
कतोक्तैवभस्मधारणस्यनावश्यकतावर्णाश्रम धर्मरूपसाधार

णधर्मप्रतिपादनपरे मनुस्मृत्यादिधर्मशास्त्रे गायत्रीजपादिका
ले भस्मरुद्राक्षादिद्रव्यकतिलकादिधारणस्या ऽनुक्तत्वात्वै स्वध
र्मप्रतिपादनपरे धर्मशास्त्रे संध्यावंदनादिकाले स्मृतद्रव्यकोर्ध्वपु
ण्ड्रधारणप्रतिपादकस्य वचनस्य बहुतरमुपलभ्यमानत्वात् त
त्र यत्किञ्चिद्वचनं प प्रधानप्रश्नोत्तरे लिखितमिति नेह लिख्य
ते यत्तु विश्वामित्रकल्पादौ भस्मधारणस्य गायत्रीजपकाले ऽव
श्यकत्वमित्युक्तं तच्छैवाद्यधिकारिविषयम् यच्च रुद्राक्षमालया
जपस्यावश्यकता नवेति तत्र रुद्राक्षमालया जपस्य सर्वथासंभ
व एव तथाहि पितामहः आह पर्वस्वेव जपेद्देवीं पवित्रां वेदमातरं
नाक्षमालादिभिर्नित्यमित्याह भगवान्मनुरिति तथा भार
द्वाजोपि मध्यांगुलेर्मध्यरेखां समारभ्य प्रदक्षिणम् मध्यमामू
लपर्यंतमंगुष्ठेन यथाक्रमं दृष्टिद्वादशसंख्यास्यादेकवारेणते
न वा वामहस्तेन संख्यातं शतमष्टोत्तरं स्मृतम् मध्यमांगुलिमूले
न यत्पर्वद्वितयं भवेत्तं वै मेरुं विजानीया ज्जपेत्तं नातिलंघयेदि
ति तथा शंखः प्रारभ्यानामिकायास्तु मध्यमे पर्वणि क्रमात् त
र्जनीमूलपर्यंतं जपेद्दशसु पर्वसु अनामिकामूलमारभ्य प्रादक्ष
ण्यक्रमेण तु मध्यमामूलपर्यंतं जपेद्दशसु पर्वस्विति तथाक्षमा
लादिभिर्नित्यं न जपेद्वेदमातरम् पर्वभिर्गीयते वेदो तन्माता
किमुत स्मृतिरिति क्वचित्पर्वजपविकलस्य मालानुमतिः स्मर्यते

यथाभरद्वाजः प्रणवस्यव्याहृतीनां गायत्र्यास्तुजपेकुशं श्रेष्ठा कुशाक्षमालास्यात्सम स्तानांजपस्यजामित्याद्यपिकुशमाला क्षमालाव्यतिरिक्तमालायानिषेधएवएवंचरुद्राक्षमालयागा यत्रीजपस्यावश्यकत्वानावश्यकत्वविचारोवायसदंततैलस्यप रीक्षातुल्यः यदिविश्वामित्रपद्धतौरुद्राक्षमालयाजपस्यवि धायकानीवकानिचिद्वचनानिदृश्यंते तानिशैवाधिकारिविषे येकुशाक्षमालाविधायकवचवद्योज्यानीति श्रीः भगवत्पूज नसमयेकानिकानिपात्राणिशस्तानीति पञ्चमवाक्यम् तत्रे दमुत्तरम् वैखानसपंचरात्रादिग्रन्थेषुभगवत्पूजनप्रकरणे आश्रमानुरोधेनवैश्रवानुरोधे नत्रयानियानिपात्राणिभगव त्पूजनार्हाण्युक्तानितानितानिशस्तानीति श्रीः गंगाजलेन भगवत्स्नानंसमीचीनंनवेतिषष्ठंवाक्यम् तत्रोत्तरम् ब्रह्मद्रव रूपेणवहुषुशास्त्रेषुसर्वोत्कृष्टत्वेन प्रतिपादितेनगंगाजलेन भगवत्स्नानंसमीचीनमिति भवत्संप्रदायरहितविद्वत्तादि गुणयुक्तब्राह्मणदृष्टमन्नंभोज्यमभोज्यंवेति सप्तमंवाक्यम् तत्रेदमुत्तरम् अस्मत्संप्रदायैकांतिनामस्मत्संप्रदायविरुद्ध वचनाचारयुक्तैः पंडितैरपंडितैर्ब्राह्मणैरब्राह्मणैर्वासहास नशय्याभोजनादिव्यवहाराणामकर्तव्यत्वंतावत्परमैकांतिक धर्मप्रतिपादिकेषुस्मृत्यादिषुबहुशःप्रतिपादितम् तादृशपार

मैकांत्यधर्मविरुद्ध वचनाचारशीलानांसहवासेनहिशतता
त्तायादिव्यवहारैः पारमैकांत्यधर्मानुष्ठानादिषुकदाचि
न्मनसःशैथिल्यंमाभूदिति यथावापतिव्रतायाः पातिव्रत्यधर्म
शैथिल्यंमाभूदिति पातिव्रत्यधर्मविमुखानामन्यपराणांमातृ
पुत्रीस्वसृश्वश्रूप्रभृतीनामपिस्त्रीणांसहासनशैयाभोजनादि
नकर्तव्यंसन्तोवदन्तितादृशसहवासैरसाधारणधर्मस्यादेव
शैथिल्यंबहुधा अतिकठिनतरोऽप्ययः पिंडोवन्हौनिक्षिप्यब
हुधाध्मायमानोद्रवीभूयस्वस्वरूपंत्यजतिहीति अथःभवत्संप्र
दायस्यसर्ववर्णद्दष्टमंन्नंभुज्यतेनवेत्यशंकायामिदमुत्त
रम् अस्मत्संप्रदायस्यपुरुषविशेषद्दष्टान्नभोजनस्यशास्त्रे नि
षेधोनोपलभ्यते यद्यपितथापिनभुज्यते पूर्वाचार्यैरभिसंधिवि
शेषेणतस्यपरित्यक्तत्वात् अथयदितेकर्मविचिकित्सावाद्दत्त
विचिकित्सावास्यादित्यादिना यथातेतेषुवर्तेरन्तथातेषुवर्ते
थाद्दत्यंतेनवेदमनूच्याचार्योंतेवासिनमनुशास्तीत्यनुशासनप्र
करणस्थेनतैतरीयश्रुतिवाक्येनपूर्वाचार्यानुष्ठिताचारस्य त
दनुयायिनामावश्यकत्वाभिधानात् तथाचस्मृतिः धर्मज्ञस
मयः प्रमाणं वेदाश्चवेदोऽखिलोधर्ममूलंस्मृतिशीलेचतद्वि
दामाचारश्चापिसाधूनामात्मनस्तुष्टिरेवचेत्यादिका पूर्वाचा
र्याणामभिसंधिश्चायम् नह्विबाह्यचिन्हमात्रेणपारमैकांत्य

धर्मनिष्ठाज्ज्ञातुं शक्यतेकदाचिदृष्टत्यर्थं भयादिनावान्तरनि
ष्ठान्यानामपिवाह्यचिन्हधारणसंभवात् तैस्सनिष्ठान्यै
स्सल्लापसहवासादिकमुक्तधर्मश्रैष्ठिल्यभियानकर्तव्यमेव सं
व्यक्परीक्षितान्तरनिष्ठैस्सहवासादिकरणेनकोपिविरोधस्त
थापिसजातीयविरोधादिकंबहुतरक्लेशमूलं संभवेदतोगार्ह
स्थ्यादिव्यवहारार्थमवश्यापेक्षितसजातीय व्यतिरिक्तैस्सह
भोजनादिकंपरित्याज्यमिति तथाक्वचित्स्वत्वेभगवत्सन्निधा
नेभुज्यतएवतद्दृष्टमपीति यत्तुएतत्पश्चादन्यच्चलिखित
मितिकृतम् रामानुजीयमतमत्यन्तमप्रमाणम् अर्थसम्पादना
र्थंकल्पितम् रामानुजीयास्तेताहशमतंप्रवर्त्यव्यामोहयन्ति
लोकान् एतन्मतंहिश्रुतिस्मृत्यादिषुक्वापिनोपलभ्यते इत्या
दिकम् तदत्यन्तमनभिज्ञातानिबन्धनमिति प्रतिभाति त
थाहि रामानुजीयमतमित्यनेन श्रीरामानुजियामुनमुनिन
ाथमुनिप्रभृतिभिः पूर्वाचार्यैस्तदुपजीव्यग्रन्थकर्तृभिर्बोधायन
म ुा ा ह देहादिभिन्नपिभिस्स्वांगीकृतप्रतितत्वार्थमात्र
मिवक्षित मुततद्विशेषोवानाद्यःपक्षः तैर्ह्यजीवप्रकृतिम
हदादिविशेषांताच्चे तनपदार्थानामंगीकृततयातेषांचधर्मवि
वादेस्वरूपेकस्यापिविवादाभावात् अथतदविशेषोऽस्मामणि
कः तथाहि विशिष्टाद्वैतंक्वचापिनश्रूयते तथा तत्रचक्रा

दिमुद्राधारणम् रुद्राक्षे तयोर्ध्वपुण्ड्रधारणं शिवादिदेव
तान्तरार्चनाभावइत्यादिकंकुत्रापिनश्रूयतइतिचेन्न विशि
ष्टाद्वैतकुत्रापिनश्रूयतइत्यनेन विशिष्टन्नश्रूयतइत्युच्यते ऽ
द्वैतम्वा नप्रथमः सर्वज्ञत्वसर्वात्मत्वअपहतपाप्मत्वकार
णत्वकार्यत्वतदुपयोगिविशेषण सर्वशरीरत्वादिविशेषणवि
शिष्टस्य सर्वत्रश्रूयमाणत्वात् तादृशविशेषणविशिष्टमेकमे
वेतिद्वितीयोपिपक्षोनसम्भवतितप्तमुद्राधारणम् नश्रूयतइ
तितुशास्त्रानवलोकनकृतम् चतुर्षु वेदेषु तदुपबृंहणस्मृतो
तिहासपुराणादिषुतत्प्रतिपादकवाक्यानां बहूनांसुदर्शन
मीमांसाचक्रोल्लाससच्चरित्ररक्षापरिकरविजयादिग्रन्थेष्वस्म
दाचार्यैः रामार्चनचंद्रिकाहरिभक्तिविलासादिग्रन्थेषु शंक
राचार्य मध्वाचार्य संप्रदायानुयायिभिर्लिखितत्वात् तेषाम
र्थान्तरपरिकल्पनं कल्पादिकृतविनियोगनिबंधानात्परत्व
वर्णनंचनस्वारसिकाविरुद्धश्चतदर्थप्रतिपादनस्य पंचरात्रादि
कृतचक्रादिधारणविनियोगनिबंधनतत्परत्वस्य चनविरो
धिकेषांचिन्मंत्राणांहिशकटाभिमंत्रणादौ विनियुक्तानाम
पिदेवपूजादावुपचारविशेषेविनियोगोदृश्यते अत्रविशेषतो
विचारस्तद्ग्रन्थेद्रष्टव्यः स्वेतस्तदोर्ध्वपुण्ड्रधारणेप्रमाणं
लिखितमेवदेवतान्तरार्चनाद्यभावोऽस्मदवलंबितोपायाधिका

रभूतानन्यदेवत्वप्रसंगभयक्षतः तस्माद्दीक्षितोनददातीत्यादि
नास्तिनित्यानुष्ठेयस्याप्यधिकारिविशेषस्यपर्युदासः क्षतश्चत
त्तमुद्राधारणाद्याचारोविशिष्टाद्वैतसिद्धान्तद्रुत्यादिकंस
र्वंमयिरामानुजीयमलितन् चार्थजातम् श्रुतिस्मृतीतिहासा
दिप्रतिपादितमितितदविरुद्धंचेति श्रीः एतेषामुत्तरंसम्प्रसा
र्यंदेयमितिसर्वंशेषभूतमवसिष्टंवाक्यंतत्रोत्तरंदत्तमेवयमे त
त्पश्चात्ः पंडिताभिमानिनोऽस्मदीयवाक्यजातविचाराभिप्राय
स्थानतदुत्तरपर्यालोचनलेखनमासन्नं तद्वाक्यजातंसंव्यवि
चार्यभावंनिरूप्यै तदनुगुणमुत्तरं ददंतांस्वयमसमर्थाश्चेत्पं
डितमन्यान्कांश्चिदाश्रिताश्चैसमुचितमुत्तरंदापयन्तु तदुप
रिवयमपिसमुचितमुत्तरंदास्यामः यदिलेचलेचासमर्था
स्तदाविरमंत्वितिक्षतंवाचांविसर्गैः ॥

श्री हरि र्जयति ।

निखिलवैष्णवमतदूषणायप्रवृत्ते नवैष्णवमतेषु रामानुजी
यंमतंबहुतरपंडिताग्रेसरपरिरक्षितंप्रबलतरंमत्वानेनजयपु
रमहाराजसविश्ववर्तिनालक्ष्मणनाथेनकेनचित्प्रश्नप्रतिप्रश्नले
खःकृतःसलेखोराजसंबन्धिनापरमवैष्णवेन दृंदावनेप्रेषित
इतितत्यसर्वं वैष्णवैर्दृष्टोयतत् समाधानायश्री रंगाचार्यै
र्लिखित्वायजयपुराधीशसविधेप्रेषितोलेखोयतदर्थबोधनायै

स्वनगरस्थपंडितानांकार्यपत्त्रार्थो यथावद्बोधनीयइत्याज्ञप्तम् लेखंदृष्ट्वापत्त्रार्थबोधनार्यैते हिनश्शेकुर्युर्दातदाचदिल्लीनागरिकोहिवाचालइतितन्नगरस्थितं हरिचंद्रनामानममानाधितवान् पत्त्रार्थं यथावद्बोधनार्यैसोपिनाशकदितिबोधितवान् श्री वैष्णवान्यवैष्णवमतखण्डनपत्त्रं इत्वातत्काशीस्थैःपण्डितैः संमतिंकारयित्वा मनीषितसिद्धिर्भवितिराजाज्ञांलब्ध्वा काशींप्राप्तस्विसहस्रासावशीकृतमानसजन संमतिंकारयित्वाजत्वाचस्वयंकार्यवशागतकलकत्तास्थराजसमीपंगतस्तमतिदर्शनार्यैतत्तराज्ञाकाश्यागमेयद्भविष्यति विसर्जितोयराजायदाहिकाश्यामागतस्तदाचवैष्णवैः खण्डनमण्डनार्यैचाभियोगप्रार्थनपत्त्रं राज्ञे दत्तम् विवादाययवयंप्रवृत्ताः वादिनोहिपराजित्यै वसिद्धान्तसंमतिपत्त्रं योग्यमितिप्रश्नतिलिखित्वाथराजाचसनाहंविवादायाचागत इतिकथयित्वास्वपुरंगतोथजयपुरात्स्वपत्त्रलेखप्रत्युत्तरमप्राप्यकाश्यांजयनगरराजतदधीनहरिचंद्रकृतकोलाहलंश्रुत्वा काश्यामागतं कांदिशीकंचतंश्रुत्वाकाशीस्थनिखिलशिष्ठपण्डितानां कार्यरीमावासिनापूर्वोक्तकोलाहलश्रवणं संजातधूर्तचरित्रविस्मयेनतत्प्रतिकारंचिकीर्षया ऽत्रागतेनरंगाचार्यैणसहोपविष्टः श्रीवृंदावनवासीरंगाचार्यः पूर्वलिखितप्रत्युत्तरग्रन्थरचनांदर्श

यित्वा प्रार्थितवानितिमाध्यस्थ्यदृष्ट्यासर्वैःपण्डितादृष्ट्वा ग्रन्थर चनांतत्वतोवादिप्रतिपादितदोषोपमर्दनं क्षमताचेन्मदीयले खस्यतत्रपण्डिता यूयंसर्वैःस्वनाम्नासंमतिलेखंकुरुत तदुप रिचपुनर्लेखप्रतिलेखेभवन्तोमध्यस्थाः कृताःप्रमाणतायैइ ति तद्वाक्यजातंश्रुत्वादृष्ट्वाचतत्प्रश्नोत्तरलेखं संम्यग्विचार्यो चुः अहोमौढ्यंप्रष्टुरुत्तरपितुश्चाभिज्ञता रामानुजादिवैष्ण वमतेतदीयानुष्ठिताचारे चमिथ्यादोषंवदन् जंबालैर्गगनतल माखिम्पतिजडः सर्वं वैष्णवमतं तत्रापिरामानुजमतंसकलश्रु तिस्मृतिसिद्धमसम्भाव्यदोष गन्धमतोस्मा भिरत्रसंमतिः कार्येतिचक्रुस्संमतिम्इति हीरानंदचतुर्वेदिनिर्मितमिदंव्य वस्थापत्रम् घोरनरकनिरन्तरनिवासहेतुवैष्णवसंप्रदायनिंदे तिच संवत् १९२१ का फाल्गुण कृष्ण द्वितीया रविवासरे ।

संमतो यम् ॥

१ सम्मतिरत्रार्थे भट्ट सखाराम शर्मणः ।

२ स० राजाराम शास्त्रिणः ।

३ स० गंगाधर शास्त्रिणः ।

४ स० रानडोपाह्ववाल शास्त्रिणः ।

५ स० बालकृष्ण शर्मणः ।

६ स० विठ्ठल शास्त्रिणः ।

७ स० रत्नपाल शर्मणः ।

८ स० बुद्धिनाथ शर्मणः ।

९ स० रत्नम शर्मणः ।

१० स० देवोपाह्व शर्मणः ।

११ स० श्रीरघुनाथ शर्मणः ।

१२ स० मञ्जाप शर्मणः ।

१३ स० देवोपाह्वगोविंद शर्मणः ।

१४ स० श्रीकुतीरी शर्मणः ।

१५ स० गोपालदत्तशुक्लस्य ।

१६ स० देवकीनंदन शर्मणः ।

१७ स० गोविंददत्त शर्मणः ।

१८ स० अनंतराम शर्मणः भट्टस्य ।

१९ स० कमलाकान्त शर्मणः ।

२० स० नवीननारायण शर्मणः ।

२१ स० श्रीकुलचंद्र शर्मणः ।

२२ स० श्रीमदनमोहनदेव शर्मणः ।

२३ स० श्रीरामकृष्णलालदेव शर्मणः ।

२४ स० श्रीशंभुचंद्रदेव शर्मणः ।

२५ स० श्रीकालीकुमारदेव शर्मणः ।

२६ स० श्रीकेदारनाथदेव शर्मणः ।

२७ स० श्रीचंडीचरणदेव शर्मणः ।

२८ स० श्रीआनन्दचंद्रदेव शर्मणः ।

२९ स० श्रीमातंगीपदवाणी शर्मणः ।

३० स० श्रीशिवनाथदेव शर्मणः ।

३१ स० अमृत शर्मणः ।

३२ स० ओझोपनामक श्रीचंचल शर्मणः ।

३३ स० श्रीवत्सजनमिश्रस्य ।

३४ स० श्रीआदिनाथ शर्मणः ।

३५ स० अंबिकादत्त शर्मणः ।

३६ स० नंदराम शर्मणः ।

३७ स० शिवसहाय शर्मणः ।

३८ स० रामकृष्णवेदांतिनः ।

३९ स० उमाशङ्कर शर्मणः ।

४० स० सीताराम शास्त्रिणः ।

४१ स० विश्वनाथ शर्मणः ।

४२ स० रामदत्त शर्मणः ।

४३ स० गुलजारदत्त शर्मणः ।

४४ स० गोविंदव्यासस्य ।

४५ स० छोटूमिश्रस्य ।

४६ स० वदर्यांचार्यस्य ।

४७ स० रामसुख शर्मणः ।

४८ स० चेतराम शर्मणः ।

४९ स० नाथूराम शर्मणः ।

५० स० बालकृष्ण शास्त्रिणः ।

५१ स० नंदरामस्य ।

५२ स० छोटेलालस्य ।

५३ स० रामरत्नाभिधस्य ।

५४ स० कालिदत्त शर्मणः ।

५५ स० कान्हचंद शर्मणः ।

५६ स० शिवप्रसाद शर्मणः ।

५७ स० प्रतापराम शर्मणः ।

५८ स० रामकृष्ण शर्मणः ।

५९ स० विष्णुदत्तनामकस्य ।

६० स० रामदत्तव्यासस्य ।

६१ स० सीताराम शर्मणः ।

६२ स० नरायणदत्त शास्त्रिणः ।

६३ स० मधुसूदन शर्मणः ।

६४ स० बाबूराम द्विवेदिनः ।
६५ स० नारायणदत्त शर्मणः ।
६६ स० यतिराम शर्मणोऽपरे ।
६७ स० नारायणदत्त शर्मणः ।
६८ स० रघुनंदन शर्मणः ।
६९ स० देवीदयाल शर्मणः ।
७० स० ठक्कुरोपनाम कश्मीटीकानाथ शर्मणः ।
७१ स० ओझोपनामकश्रीनिधिनाथ शर्मणः ।
७२ स० ओझोपनामकश्रीदल्लि शर्मणः ।
७३ स० श्रीरामलाल शर्मणः ।
७४ स० श्रीश्रीपाल शर्मणः ।
७५ स० ओझोपनामक श्रीअमृतलाल शर्मणः ।
७६ स० गोपाललाल शर्मणः ।
७७ स० श्रीछमकलाल शर्मणः ।
७८ स० श्रीकक्कू शर्मणः ।
७९ स० श्रीबाचूलाल शर्मणः ।
८० स० श्रीराधेकृष्ण शर्मणः ।
८१ स० श्रीरघुनाथ शर्मणः ।
८२ स० श्रीगीरधारी शर्मणः ।

८३ स० श्रीगोपाल शर्म्मणः ।

८४ स० श्रीकीर्तिनाथ शर्म्मणः ।

८५ स० श्रीमथुरानाथ शर्म्मणः ।

८६ स० वत्सा शर्म्मणः ।

८७ स० वत्स शर्म्मणः ।

८८ स० विद्यादत्त शर्म्मणः ।

८९ स० श्रीरामशङ्कर शर्म्मणः ।

९० स० श्रीकालीप्रसाद शर्म्मणः ।

९१ स० चंद्रशेखर शर्म्मणः ।

९२ स० बस्तीराम शर्म्मणः ।

९३ स० हीरानंद शर्म्मणः ।

९४ स० जयदेव शर्म्मणः ।

९५ स० आद्रूराम शर्म्मणः ।

९६ स० गंगाधर शर्म्मणः ।

९७ स० शंभू शर्म्मणः ।

९८ स० शिवप्रसाद शर्म्मणः ।

९९ स० मिश्रोपनामकघनश्याम शर्म्मणः ।

१०० स० हरदत्त शर्म्मणः ।

१०१ स० भैरवदत्त शर्म्मणः ।

१०२ स० मिश्रोपाह्वबलदेव शर्मणः ।

१०३ स० सीताराम शर्मणः ।

१०४ स० अम्बिकादत्त शर्मणः ।

१०५ स० पाड़ेयोपाह्वजानकीप्रसाद शर्मणः ।

१०६ स० गुलाबमिश्रस्य ।

१०७ स० जमैयतराम शर्मणः ।

१०८ स० सीतलप्रशाद शर्मणः ।

१०९ स० गुरुमूर्तो शास्त्रिणः ।

११० स० बेचनराम शर्मणः ।

१११ स० वाचस्पति शास्त्रिणः ।

११२ स० बाबूभट्ट शर्मणः ।

११३ स० पाडबोलोपाह्वबाबू शर्मणः ।

११४ स० लक्ष्मणज्योतिर्विच्छर्मणः ।

११५ स० ज्योतिर्विदःसेवाराम शर्मणः ।

११६ स० रामबकसज्योतिर्विच्छर्मणः ।

११७ स० सीतलमिश्रस्य ।

११८ स० ठाकुरदत्त शर्मणः ।

११९ स० मोहकमराम शर्मणः ।

१२० स० सिवचरण शर्मणः ।

१२१ सं० रामसेवक शर्मणः ।

१२२ सं० मिश्रहरचंद्र शर्मणः ।

१२३ सं० देवराज शर्मणः ।

१२४ सं० देवीचंद शर्मणः ।

१२५ सं० श्रीराम शास्त्रिणः ।

१२६ सं० फतेराम शर्मणः ।

१२७ सं० रामप्रसादब्रह्मचारिणः ।

१२८ सं० काशीनाथ शास्त्रिणः ।

१२९ सं० पण्डितलायकरामस्य ।

१३० सं० सुखलालमिश्रस्य ।

१३१ सं० दुर्गादत्तस्य ।

१३२ सं० तिवेधराम शर्मणः ।

१३३ सं० सदानंद शर्मणः ।

१३४ सं० गौरीशंकरशर्मणः ।

१३५ सं० भट्टोपनायककमलाकर शर्मणः ।

१३६ सं० लक्ष्मणभट्टस्य ।

१३७ सं० यदुवीरदत्तस्य ।

१३८ सं० शंकटाप्रसादद्विवेदिनः ।

१३९ सं० कबेलधीनायणस्य ।

१४० स० सालिग्राम शर्मणः ।

१४१ स० बालकृष्ण शर्मणः ।

१४२ स० भूदेव शर्मणः ।

१४३ स० पद्मनाभ शर्मणः ।

१४४ स० गंगेस शर्मणः ।

१४५ स० गंगाराम शर्मणः ।

१४६ स० हरगोपालनाम्नः ।

१४७ स० चंदूलाल शर्मणः ।

१४८ स० कालीचरण शर्मणः ।

१४९ स० अमीचंद शर्मणः ।

१५० स० गोकुलप्रसाद द्विवेदिनः ।

१५१ स० रघुनंदन शर्मणः ।

१५२ स० देवीदयाल शर्मण ।

१५३ स० रघुनंदनस्य ।

एवंसर्वेषांपण्डितानां हस्ताक्षराणिनमुद्रितानिविस्तर भिया प्रधानपण्डितानांसंमतिरेवमुद्रिता ॥

# शुद्धिपत्रम् ।

——oo——

अत्र यत्र यत्र ध्य वर्णो लेखनीयः तत्र सर्वत्र ञ्च वर्णो लिखितः ध्य वर्ण मुद्रा भावात् ॥

| पृष्ठः | पंक्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| १ | १० | यू | य |
| ३ | ३ | श्री | षां |
| ३ | ५ | खं | खन् |
| ३ | ८ | रण | राम |
| ३ | १४ | श्रि | श्री |
| ४ | १५ | स्मा | स्माः |
| ५ | १ | ह | ड |
| ५ | १ | दि | दृ |
| ५ | ८ | भिदि | दिभिः |
| ५ | १६ | त्तदभादि | त्तदादि |
| ५ | १६ | नववा | नव |
| ६ | ८ | ग्यत | ग्यते |
| ६ | १३ | खि | खि |
| ६ | १६ | क्य | क्यँ |
| ६ | १८ | सप्र | सम्म |
| ६ | १९ | संप्र | सम्म |
| ९ | १२ | मपर्वं | मनिष्ट |

| पृष्ठः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १० | ७ | शब्द | शाब्द |
| १० | १४ | मिदध | मिदधि |
| १० | १६ | मेवे | मवे |
| ११ | २ | प्रमा | प्रामा |
| ११ | १३ | ष्युदर्धं | ष्यूदर्ध्वं |
| १२ | ४ | यप्र | याप्र |
| १४ | ७ | याग्या | योग्या |
| १४ | १७ | रीति | रीती |
| १५ | [illegible] | चार्यःईं | चर्यईं |
| १५ | १४ | नत्रॄ | नप्रत्रॄ |
| १६ | १ | विह्नी | निह्नी |
| १६ | १९ | स्वस्वा | स्वस्वा |
| १७ | ३ | विद्या | विद्यां |
| १७ | १३ | संचास्य | मचास्य |
| १८ | २ | धारमी | धारद्व |
| १८ | १० | जन्मजः | जन्मानः |
| १८ | १८ | ङितेव | ङितव |
| १९ | १ | त्यर्थँ | त्यर्थ |
| १९ | ९ | तँतदा | तदा |
| १९ | १८ | वांक्ये | वाक्य |
| २० | १२ | विधाम | विधानि |
| २० | १४ | रिषो | ऋषो |
| २१ | १ | स्वपा | श्वपा |

| पृष्ठः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २१ | ३ | विस्वा | विश्वा |
| २१ | ७ | रादयः | राद्यु |
| २१ | ११ | पुस्क | पुष्क |
| २२ | ४ | गर्धादी | गर्भाधानादी |
| २२ | ७ | तद्वि | तद्धि |
| २४ | २ | स्तव | सुव |
| २४ | ५ | स्वर्गायस्वा | स्वर्गपश्वा |
| २४ | ७ | भीधी | भिधी |
| २४ | १८ | भावव | भाव |
| २४ | १७ | धर्मैद | धर्मैदं |
| २५ | २ | तृप्रतीतार्थं | ताचप्रतं |
| २६ | ६ | कोप | काप |
| २६ | १७ | दिना | दीना |
| २७ | २ | प्रदायु | प्रदाय्यु |
| २७ | १२ | वेदमनु | वेदमन् |
| २७ | १२ | अनुषास्वि | अनुशास्ति |
| २७ | १४ | माकुतो | माःकुतो |
| २८ | १ | नद्दाणां | नद्दाणां |
| २८ | २ | त्यज | त्यज |
| ३१ | १६ | मान | मानं |
| ३३ | १ | मालात् | मलात् |
| ३३ | १३ | दिताद्धो | दितद्धो |
| ३४ | १२ | नाथतु | नाथतु |

| पृष्ठः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३५ | १४ | गायच्यानु | गायत्र्यनु |
| ३५ | १६ | रस्खवत् | रस्ववत् |
| ३६ | ४ | योगीन्रा | योगिन्रा |
| ३६ | ४ | ब्राह्मण्या | ब्राह्मण्यां |
| ३६ | ६ | तदधस्र | तदध्वँस्र |
| ३६ | १० | स्रादिकर | स्राधिकर |
| ३७ | २ | नैय्याका | नैय्यायिका |
| ३७ | १९ | मंचनु | मन्त्तु |
| ३८ | ७ | गाह्निनस्र | गाह्निनःस्र |
| ३९ | २ | निस्रेध | निषेध |
| ३९ | ४ | निस्रेध | निषेध |
| ३९ | १६ | योगस्रसु | योगःस्रम् |
| ४० | ५ | सुतत्रा | सुततत्रा |
| ४० | १६ | तेस्रांति | तेषांति |
| ४१ | ९ | स्रगांध | स्रग्गंध |
| ४१ | १९ | गुरुस्रर्व | गुरुंसर्व |
| ४२ | १ | शुस्राणि | शुस्राणि |
| ४२ | ४ | पारस्रं | पार्स्वं |
| ४२ | ५ | सर्वाणि | सर्वणि |
| ४२ | ११ | नामात्यंगे | नामान्यं |
| ४२ | १२ | दूदानो | दूदानीं |
| ४३ | ४ | धार्पत्यम्नि | धार्यमित्यम्नि |

| पृष्ठः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४२ | १४ | नियमादि | नियमादिः |
| ४२ | १६ | रूपेण | रूपेण |
| ४४ | ११ | यदिरहस्ति | रहास्ति |
| ४४ | १४ | दमुत्वेन्यस्मत् | दनुत्वेयस्मत् |
| ४४ | १५ | प्रमाण्य | प्रामाण्य |
| ४४ | १८ | दिहि | दिति |
| ४५ | ७ | मर्मितः | निमर्मः |
| ४५ | १० | तन्तिश्चय | तन्निश्चय |
| ४४ | १५ | विष्णो | विष्णो |
| ४५ | १८ | वैलच्चन्येन | वैलचण्येन |
| ४६ | ८ | तर्वर्त | तरवर्त |
| ४७ | ४ | यस्मत्य | यस्मात्य |



बनारस लाइट यन्त्रालय मे मुद्रित हुआ ।